# ऋतम्

(उपन्यासः)

प्रणेता

डा० केशवचन्द्र दाशः

१९८८




देववाणी-परिषद्, दिल्ली

विहारः, नयी दिल्ली–११० ०५९

# ऋतम्

'देववाणी—परिषद्, दिल्ली'ति संस्थाया
एकोनविंशे संकल्पनादिवससमारोहे
मुख्यातिथिपदमलंकुर्वद्भिः
कर्मठसमाजशास्त्रिभिः समाजसुधारकैः
महात्मगान्धिनां जीवनादर्शमनुसृत्य मानवसमाजमुपकर्तुं
'सुलभ इण्टरनेशनल' संस्थायाः संस्थापकैश्च
पीएच०डी०, डी०लिट्०—विभूषितैः
'पद्मभूषण' डा० विन्देश्वर पाठक — महाभागैः

डा॰ श्रीमती उषा सत्यव्रत महाभागाभ्यः

सादरमुपायनीकृतोऽयं ग्रन्थः
२१—८—१९९४




देववाणी-परिषद्, दिल्ली



६ वाणी-विहारः, नयी दिल्ली—११० ०५९

# ऋतम्

(लघूपन्यासः)

विद्वन्मणि :

**डा० केशवचन्द्र दाशः**

एम०ए०, एम०फिल्, पीएच०डी०

व्याकरणाचार्यः, व्याकरणपारङ्गतः, श्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य

न्यायदर्शनविभागे आचार्यः, पुरी-752002




प्रकाशिका

**देववाणी-परिषद्, दिल्ली**

६, वाणी-विहारः, नयी दिल्ली-११००५९

(भारतम्)

ऋतम् (लघूपन्यासः)

लेखकः : डा० केशवचन्द्र दाशः

प्रकाशकः : देववाणी-परिषद्, दिल्ली
६, वाणी-विहारः, नई दिल्ली-११००५९

मुद्रकः : प्रवीण प्रिंटिंग सर्विस
३५, टी एक्सटेंशन उत्तम नगर,
नई दिल्ली-११००५९

संस्करणम् : प्रथमम्, १९८८

मुल्यम् : विंशतिः रूप्यकाणि रु० २०-००



RITAM

Author : Dash Keshava Chandra

Publisher : Devavani Parishad, Delhi
6, Vani Vihar, New Delhi-110059

Printer : Parveen Printing Service
35, T Extn., Uttam Nagar,
New Delhi-110059

Edition : First, 1988

Price : Rupees Twenty only Rs, 20-00

# प्रास्ताविकम्

'देववाणी-परिषद्, दिल्ली' इतीयं संस्था सद्ग्रन्थप्रकाशनरूपं स्वोद्देश्य-मनुसृत्य अद्यावधि नैकेषां ग्रन्थानां प्रकाशनं कृतवती। इदानीमनया षट्पञ्चा-शत्संख्याकग्रन्थरूपेण डा० केशवचन्द्रदाश-प्रणीतः **'ऋतम्'** इतिलघूपन्यासः प्रकाश्यते।

जीवनमार्गे गच्छन्तः सन्देहचतुष्पथमायाता वयं सत्यपथमाविष्कर्तुं तदैव प्रभवामः, यदा अस्माकं चित्ते विद्यमानं सत्यमस्मान् प्रेरयति। अलेख-अनन्त-उपार्क - कुलभद्र - शन्नोदेवी - अवनी - गुरुदेव-प्रभृतिपात्रावलम्बितेयं कथापि 'अन्तर्निहितं सत्यं गुरुः भविष्यति'-इति विचारविन्दुमेव विस्तारयति।

अर्वाचीनसंस्कृतरचनाप्रपञ्चे विद्वन्मणिः डा० केशवचन्द्र दाशः इति चर्चितं नाम। अद्यावधि असौ विंशतिपुस्तकानां प्रणेता। प्रगतिशीला अस्य शैली। सरलभाषाविन्यासे अस्य दार्शनिकी चेतना प्रतिपदं प्रसन्नगम्भीरा। कला-दर्शनयोः समन्वितिः अस्य विषयविचित्रा। समसामयिकजीवनप्रवृत्तिः अस्य रचनायां प्रमुखधारा। परम्पराया भावस्पर्शः अस्य चिन्ताधाराया नेपथ्य-प्रलेपः। संस्कारप्राणता अस्य निरूपणरीतिषु रमणीयमौलिकता।

अस्य महानुभावस्य परिचयोऽस्माभिः देववाणी-परिषदा इतः पूर्वं प्रकाशितस्य **'निकषा'** इतिनाम्नो लघूपन्यासस्य प्रास्ताविके दत्तः।

पाठकाः डा० दाशमहाभागस्य अनेनोपन्यासेनापि काव्यानन्दं प्राप्तुं सादरमाहूयन्ते।

रमाकान्त शुक्लः

(डा० रमाकान्त शुक्लः)
महासचिवः
देववाणी-परिषद्, दिल्ली
६ वाणी-विहारः, नयी दिल्ली-११००५९

देववाणी-परिषदो
द्वादशः स्थापनादिवसः
१३-१२-१९८८ ई०

# निजकथा......

जीवनप्रवाहस्य पदे पदे व्यवहारपराभवः ।
निजावलम्बने मौनायते वाग्वृत्तिः ।
स्वार्थकातरस्पन्दनेषु सारायते अपह्नुतिः ।
तथापि निर्भासं न तिष्ठति वस्तु ।
आबद्धबोधे अन्ततो लाञ्छनीभवति
सत्यस्य परिभाषा ।

व्यवहारे सत्यं नाम वचनमेव ।
भावविनिमये तदेव प्रधानम् ।
मनोनिवेदने तदेव विश्वासनिदानम् ।
सकलविधाने तदेव अभिधानम् ।
विन्यासमात्रं तदेव रिक्तम्...
मुक्तम्...विविक्तम्......।

एतदेव मनसि निधाय निजप्रतिफलनं द्रष्टुं ममेदं चेष्टितम् । कुण्ठिता कुत्र लेखनी । कुत्र च अवगुण्ठनपीडिता भावधारा । अप्रकट-प्रतीक्षायां तु इष्टामिह सत्यस्य कापट्यम् ।

कार्तज्ञ्यपरिसरे सम्मुखे मे महाद्रुमा अनेके । तेषु अन्यतमो देववाणी-परिषदो महासचिवः डा० रमाकान्तः शुक्लपरः...... ऋतम्भरः......।

—केशवचन्द्रः

# ऋतम्

(रचयिता—डा० केशवचन्द्र दाशः, पुरी)

कपटप्रच्छदपटे मोहमयो प्रकृतिः ······

चरणद्वयम्······गमनं तु एकम्। करद्वयम्······करतालं तु एकम्। कर्णद्वयम्······श्रव्यं तु एकम्। नयनद्वयम्······दृश्यं तु एकम्। ओष्ठद्वयम्······स्मितं च एकम्। अतः समकरो हिमकरः। समयश्च समरसः। आकर्षणे सृष्टिः। विकर्षणे संहारः। सहस्रारे प्रणवलीला ······ऋतरसा······।

जीवो निमीलिताक्षः।

इतिहासो विशदः। उत्पत्तिः औपनिषदिकी। प्रवाहो जीवनवहः। व्यवस्थापन्नस्तु मध्यमपथः। अभिगमः अभिरामोऽपि अनिर्वचनीयः। स्मृतिराशिः व्यवधानमयः। नियमप्रचय एव अनुभवः। विरामो ध्रुवः। अन्त्यं तु अचिन्त्यम्।

अलेखः निजदेहमपश्यत्। कौपीनं शीतलायते। कटिवलये स्थूल-सूत्रं पीडादायकम्। शीतस्पर्शे देहोऽपि कम्पनरङ्कः। अलेखः कौशेय-स्यूतं स्थण्डिले स्थापितवान्। पेटिकातो भस्म वहिष्कृत्य प्रत्यङ्गं विलेपितवान्। ततो दिग्वलयमपश्यत्। पौषचन्द्रिका उपक्रमे सुन्दरी। संध्या मन्दारशोणा। उषरप्रसरो निजश्मश्रुरिव निष्क्रमः······ निष्क्रमणीयश्च। जीवनचर्यायां तथापि उपचारायते निष्ठुर-भिक्षामुष्टिः······।

अविकलः कालशकलः।

अपरपूर्वाह्णे निर्गतः अलेखः। सुन्दरग्रामे अद्य भिक्षा। मुष्टिमेय-शिष्यगृहे आतिथ्यम्। ततः प्रतिश्रुतिपालनाय उपदेशः। सत्यरक्षार्थं शपथपाठः। पुनर्दर्शनाय च प्रस्थानम्। प्रथमतः कुलभद्रस्य द्वारमुपगतः अलेखः।

कुलभद्रः अभिजातः। वयोभारेण मध्यमवयस्कः। दरपलितः केशराशिः। चिन्तापन्नो मुखबन्धः। प्रतिज्ञापिता उच्चदृष्टिः। पृथुलकायो गौरवर्णः। दुकूलवलये श्वेतलः शोभनीयः। उत्तरीयम् औचित्यपाटवम्। पादसंचार उदात्तमन्थरः।

"भिक्षां देहि"—ध्वनिनिवहेन रुद्धद्वारं मुखरीकृतवान् अलेखः। रक्षी अनुमतचञ्चलः संजातः। निजपथं पाथेयीकुर्वन् स सन्न्यासिनं पुरोऽकरोत्।

शरणसौजन्ये कुलभद्रो विनीतः।

रक्षी च स्थानापन्नः।

अलेखो मङ्गलगिरा आशिष्यं व्यतरत्।

उपचारमुपायनीकृत्य कुलभद्रः कुशलमपृच्छत्। तथैव वचनविनिमये शुभं व्याहरन् अलेखः। प्रसङ्गक्रमेण च स स्मारितवान्।

—अद्य प्रतिज्ञापितो दिवसः।

किंचित् गम्भीरोऽभूत् कुलभद्रः।

--जाने·· गुरुदेव !

कुलभद्रस्य मुखे द्विधाभावमालक्ष्य अहसत् अलेखः।

—तर्हि, किं चिन्तयति भवान् ?

अनुरोधमुखेन कुलभद्रः अयाचत।

—अन्यूनं हायनपरिमितं समयं ददातु।

—किमेतावति अभिलाषपूर्तिः स्यात् ?

—आशासे······।

—तथास्तु।

अहसत् अलेखः। निर्विकारमनोभावे तस्य एकीभूतः प्राणिप्रपञ्चः। अहो, व्यामोहः ? कियान्न प्रतिज्ञाशिथिलोऽयं जीवः ? कियान्न सत्यभीरुः ? कियान्न आसक्तिजडोऽद्य कुलभद्रः ? सत्यरक्षार्थं कियान्न कुण्ठाकुलः ? तद्दिने अतिकातरभावेन पुत्रस्य जीवनं संप्रार्थ्य स विह्वल आसीत्। श्मशानवैराग्ये उद्बुद्धो भूत्वा सत्यबद्धः संजातः—

"महात्मन् ! यद्ययं जीवनं प्राप्नुयात् तर्हि तस्य समग्रमपि जीवनं भवत्सेवायां नियोजयिष्यते। भवान् तस्मिन् जीवनं संचारयतु। तमपि शिष्यत्वेन अङ्गीकरोतु······दीक्षयतु। इयं मे भिक्षा भवदीयचरण-कमले······।"

परमिदानीं सत्यशिथिलः कुलभद्रः······

अलेखः प्रस्थातुमुत्थितः।

शरणसहृदयोऽभूत् कुलभद्रः।

निजपथे पुनश्च पथिकः अलेखः। शपथप्रेरणामूले स सत्यप्रतिमः। विच्युतिमीमांसायां संसारी स निरुपमः। वास-निर्वासनयोः निरर्थ-भूमिकायां आत्मना स दुरवगमः। सत्यस्य प्रयोगसाहस्री तस्य शान्तेरनुगमः। पाथेये अप्रतिमः कश्चित् तस्य प्रियतमः।

कुलभद्रः पश्चाद् विवर्त्तितः। एकपार्श्वे दण्डायमाना अवनी। नयने तीव्रदृष्टिः। नासिकाग्रे कोपपुलकम्। ओष्ठे पिहिता वाक्स्फुरणा। चिबुके क्षीणतरङ्गः। कपोले स्फीतरक्तिमा। मुखे विरक्तिभावः। किंचिद् विलोक्य अन्तः प्राविशत् कुलभद्रः।

सम्मुखे पूजापात्रहस्ता शन्नोदेवी। पूर्वरीत्या सा पतिदेवम् अर्चितवती। मस्तके सिन्दूररेखाम् अङ्कितवती। चरणे पुष्पाणि निक्षिप्य प्रणतवती। ततो निजमार्गे प्रस्थिता। पूजागृहं च प्रविष्टा। उदास-धूपस्य विततधूमकुण्डलीं क्षणाय विरुज्य सा यथस्थानम् उपविष्टा। मौनविलासे कुलभद्रः भावक्लिन्नः।

उपनिषण्णा शन्नोदेवी।

कुलभद्रः अतीतं मनस्यति—

संकल्पमुखरो विवाहसमयः। प्रतिश्रुतिसम्पन्नो मनोभावः। स्वयमा-वेगपुङ्गवः कुलभद्रः। मधुयामिनी विनयपुण्या। अवगुण्ठनतले तरल-नयना शन्नोदेवी। पुलकप्लावने कुलभद्रो दहनदुर्बलः।

—कस्ते अभिलाषः······?

शन्नोदेवी क्षीणमहसत्।

कुलभद्रः प्रगल्भः संजातः ।

—सर्वमपि ते अभिलाषं पूरयिष्यामि ।

—प्रतिजानातु ।

—विवाहमण्डपे शपथरूपेण तु संकल्पितम् ।

—सत्यम्······?

—यावज्जीवं ते कामनां पूरयिष्यामि ।

—किमेतत्······?

—सत्यम्······सत्यम्······सत्यम्······।

तत उपनिषद्य पुलकेन समं स्मितममेलयत् कुलभद्रः । शनैश्च अवदत् ।

—जीवने न कदापि त्वत्तो वियुक्तो भविष्यामि । न वा कश्चिन् मध्यस्थ आवयोः संपर्कं प्रतिबध्नीयात् ।

तदनु समयक्रमः सौमनस्ये व्यतीतः । सीमन्तोन्नयने हुतवहाऽभूत् शन्नोदेवी । रसो निष्पन्नः । प्रथमपुत्रो भूमिष्ठोऽभवत् । भूमिदर्शनात् पूर्वं स तु पूर्वस्थानं प्रत्यागच्छत् । मर्माहताऽभूत् शन्नोदेवी । सान्त्वना-सरोवरे कुलभद्रः शन्नोदेवीं भृशं स्नापितवान् । विलक्षणक्षणनिवहे शन्नोदेवी पुनरपि सन्ततिसम्भवा संजाता । मरणमुखात् प्रत्यावर्त्य सा रुग्णा अभूत् । किंतु पुत्रस्य जननी अभवत् । उत्सवविधाने कुलभद्रः अभिजातानाम् उदात्तदृष्टिं नीचीकृतवान् । परं न पुत्रः न वा शन्नोदेवी उत्सवसुखम् अलभत । पुत्रः पूर्ववत् अल्पदिनानाम् अतिथिरभूत् । शन्नोदेवी चिराय पीडिता ।

सेवाविभवे कुलभद्रः अभिभूतः ।

शन्नोदेवी तु ज्वालागलिता । कुलभद्रमनसि सा क्रमशः दुष्कृतिपांसुला अभूत् । तथा च मथ्यमानोऽपि स विवाहसंकल्पं परिपालितवान् । तस्य सेवया शन्नोदेवी तरलहृदया,अभूत् । किंतु उभयस्य नैराश्ये पुनर्मिलन-विषयो निरर्थकः संजातः । जीवनधारणं केवलं संकल्पनिमित्तम् । ······सान्त्वनानिमित्तम्···द्विधाभावस्य विनाशनिमित्तम् । कालक्रमे दुर्बला अभूत् शन्नोदेवी । तस्या आकृतिः वार्धक्यस्य चित्रलेखा

यथा पूजनीया अभवत् । चिन्ताकुलः कुलभद्रः कुलपांसुलदोषेण आत्मानमभियुज्य व्यथितोऽभूत् ।

प्रहरो नीरवधर्मा ।

शय्याशायिनी शन्नोदेवी । निकटे उपविश्य कुलभद्रः खिन्नभावेन शनैरभिलपितवान् ।

—देवि ! इयमस्माकं दशा । कुलरक्षा कथं भवेत् ?

क्षणं विलोकितवती शन्नोदेवी । रुग्णनयने तस्याः कुलभद्रस्य शब्दराशिः निरर्थक आसीत् । निरुत्तरा सा नेत्रं निमीलितवती । पुनरपि कुलभद्रः तदेव स्फुटतरमावर्तितवान् । शन्नोदेवी अस्वास्थ्यम् अन्वभवत् । नेत्रकोणद्वये अश्रुविन्दु कर्णमूलमगलत् । कुलभद्रः तर्जन्यग्रेण लोतकमपसार्य आश्वासनामुखेन अवदत् ।

—न किमपि चिन्तय । भवितव्यं भवतु नाम…… ।

शन्नादेवी कुलभद्रस्य मनोभावं सम्यक् आकलितवती । …… सुखे दुःखे च समभागो नाम किम् ? शरीरचर्यायां क्व वा एकात्मभावभूमिः ? इन्द्रियार्थसन्निकर्षे किं वा पर्याप्यते ? कर्मप्रवाहे ज्ञानार्जनं मुक्तये भुक्तये वा ? जीवने साफल्यं नाम कर्मपूर्णता अथवा फलभागित्वम् ? अन्ततः साफल्यं किम् ? भुक्तिर्वा मुक्तिर्वा ? किमत्र तथ्यम् ? किं वा सत्यम् ? एवं नानाविधप्रश्नान् मनसि कृत्वा अलेखस्य स्वरूपं ध्यायते स्म शन्नादेवी ।

उपगतः कुलभद्रः ।

भाराक्रान्तं मुखमण्डलम् । केशपाशः शीतार्तवदरीपादपो यथा गोधूलिसुन्दरः । अकर्तितश्मश्रुस्तरं यथा हेमन्तप्रान्तरम् । वसनवेशः कौलीन्यविवशः । विकलभावेन सः अवदत् ।

—देवि ····· ! अद्य एका मे प्रार्थना अस्ति ।

शन्नोदेवो औदासीन्यं प्राकटयत् ।

—कथयतु ।

कुलभद्रस्य स एव प्रश्नः ।

—कुलरक्षा कथं भवेत् ?

—भवान् उपायं चिन्तयतु ।
—चिन्तितवान् ।
—किम् अनुमोदनमपेक्ष्यते ?
—तदेव ।
—तथास्तु ।
प्रस्तावे सहमताऽभवत् रुग्णोदारा शन्नोदेवी । कुलभद्रस्य तु साहसो नासीत् । तथापि तस्या वचने विश्वास आसीत् । तदेव शिरसि कृत्वा कुलभद्रो द्विपत्नीकोऽभवत् ।

अवनी कुलभद्रस्य द्वितीयपत्नी । सत्यनिर्बन्धे सा अनुयायिनी । सौभाग्याय समभागिनी । सौख्याय सहचरी । शुभाय कुलेश्वरी । शान्तये सीमन्तिनी । सेवार्थं गृहिणी ।
मधुयामिनी विसर्जनवातुला ।
मधुप्रहर उपसंहारे म्लानः । आलाप इतिरतः । प्रथममिलने प्रीति-शिथिला अवनी । किन्तु अभिज्ञरतिप्रत्यये कुलभद्रः चतुरः । स्नेह-योजनाच्छलेन सः अभिलाषमुपस्थापितवान् ।
—अवनि ! तव सौभाग्याय मया संकल्पितम् । सुखाय च प्रतिश्रुतम् । सत्यमुखेन शान्तिवासाय शपथः कृतः । किन्तु ममैका प्रार्थना वर्तते ।
उत्साहमुग्धा अवनी अहसत् ।
—नूनं पूरयिष्यामि ।
—वचनं मे नान्यथा करिष्यसीति मे विश्वास आसीत् ।
—इदानीं कथयतु ।
—त्वं तु जानासि, 'शन्नोदेवी मम'...... ।
—प्रथमपत्नी...... । तज्जाने...... । कथयतु...... ।
—इदानीं सा......
—रुग्णा......असमर्था...... । एतदपि जाने ।
—तर्हि, वचनं देहि......
—सत्यम्......सत्यम्......सत्यम्...... ।
—इदानीं तस्याः तत्त्वावधाननिमित्तं त्वं नियुक्ता । तस्याः सेवा त्वयि

न्यस्ता ।

—सर्वं ज्ञात्वा आगताऽहम् ।

—त्वं तस्या भगिनीरूपा । तवागमनस्य गुरुत्वं यथा सा नानुभवेत् तथा यत्नः कर्त्तव्यः ।

—यदि······?

—नहि । त्वज्जनितदुःखेन यथा सा पीडिता न भवेत् तथा यत्नः कर्त्तव्यः ।

—यदि कदाचित्······?

—नहि । तस्या मनसि कदाचित् दुःखं न भवतु । न वा सा अनुतपतु । इयं मे इच्छा प्रार्थना च ।

—शृणोतु किंचित् ।

—नहि, त्वं वचनबद्धा । आशासे अवश्यं सत्यं पालयिष्यसि ।

आलापः अवसितः । शय्या पर्युषिता । मधुदीपे तैलिनी निःशेषिता । अवलीढचिबुकतटे अलक्ष्यश्यामिका अभिषेकस्य स्मृतिमाहवत् । अहोरात्रस्य नाभिमण्डले अरुणप्रभा मिमीलिषिता । अवगाहने आत्मानं नवीनीकृतवती अवनी ।

अतीतं ग्रन्थीकृत्य कुलभद्रः शन्नोदेवीपार्श्वत उत्थितवान् ।

अवनी प्रतीक्षमाणा आसीत् ।

कुलभद्रः नम्रवाचा अपृच्छत् ।

— शुभाङ्को न प्रत्यागतः ।

विकृतमुखभंग्या अवनी दृढा अभूत् ।

— किमर्थं सदा शुभाङ्कः······? शुभाङ्कः······?

— तस्य जन्मदिनं निकटायते । अवश्यं तदा आगन्तव्यम् ।

— तदहं जाने ।

— काचिद् व्यवस्था विहिता वा ?

— नहि ।

— कथम् ।

— ज्येष्ठदेवी पालनमिदं निषेधयति ।
— किमर्थम् ?
— ऐषमः तस्य विवाहो भवेत् । कन्यामन्वेषयतु ।
अवनी अन्तःपुरं प्रविष्टा ।

कुलभद्रः अवनीलपनं स्मारं स्मारम् उपविष्टः । अद्यापि अवनी कोपस्वभावा ? कपालपुटे कति केशा धवलिताः । मुखमण्डले मसृणभावो म्लानः । चर्मणि पलिताङ्कः अङ्कुरितः । तथापि सा आत्मानं न परिचिनोति ?

कुलभद्रो भावाविष्टः ।

अवनीसेवया शन्नोदेवी पुनर्जन्म अलभत । गलिताङ्गे तस्याः पुनस्तारुण्यं शोभावहमभूत् । सीमन्तसिन्दूरे तस्याः नवदीप्तिः आकर्षणं व्यतरत् । दुकूलतरङ्गे शन्नादेवी महीयसी अभूत् । सौभाग्योदये कुलभद्रः मान्यः संजातः । अवनी तु प्रभुत्वविभवे पट्टमहिषी आसीत् । तथापि ग्लानिचयेन मनस्तस्या अभिभूतम् ।

मासान्तरं मनोहरम् ।

शन्नोदेव्याः नव्यसंपर्के कुलभद्रः प्रार्थनामयः संजातः । इच्छाप्राबल्ये समयः रतिसार्थकोऽभूत् । अनेकमानसिकीप्रच्छदे शन्नोदेवी गर्भधारिणी अभवत् । विपाकमासे तृतीय गर्भः पुत्रदायकः संजातः । अलेखप्रसादात् पुत्रोऽयं शुभाङ्कः । एक एव सः सर्वेषाम् आदरपदार्थः । नाना समर्पणेषु, बहुशपथेषु, पुष्कलसंकल्पेषु च शुभाङ्कजीवनं परिपूर्णम् । अवनीमनसि तु घनिष्ठग्लानिः । तथापि सा गृहपत्नी ।

शन्नोदेवी अपि ईर्ष्यापरायणा । पुत्रप्राप्तेः गौरवमनुभूय सा नीचदृष्ट्या अवनीं द्रष्टुमारभत । क्रमशः अवनोलोतके कुलभद्रस्य संसारः सन्तुलनविहीनोऽभवत् । मनोमालिन्यं कलहे परिणतम् । तदनु अवनी सदा विरक्ता…कुपिता… ।

कुलभद्रो विपन्नः ।

पूर्वसंकल्पे स आत्मानं विमथ्य सत्यभ्रष्टो भवितुमुपक्रान्तः । मानसिक भारसाम्यं च हारितवान् । अशान्तेः वलये नितरां दग्धः । उभयं बोध-

यितुं स बहु चेष्टितवान् । किन्तु सफलो नाभूत् । एकदा निजप्रकोष्ठे स शन्नोदेवीमाहूय अभाषत् ।

—किं सर्वं विस्मृतम् ? केयम् अवनी ? किमर्थम् आगता ? कथं तव सेवायां नियुक्ता ? केन प्रकारेण सा अस्यैव गृहस्य सकलकार्याणि निभालयति ? किमेतत् सर्वं जानासि ?

शन्नोदेवी सरलभावेन कुलभद्रस्य मुखं विलोक्य चिन्तया जडीभूता । कुलभद्रः विचलितभावेन भाषते स्म ।

—अवनीसेवया त्वं पुनर्जन्म लब्धवती । पुत्रं च प्रसूतवती । पुत्रं प्राप्य सर्वं विस्मृतं किमु ? किमर्थं ते ईर्ष्या ? कथं च असूया ? को वा मत्सरस्ते ?

शन्नोदेवी विषण्णा ।

कुलभद्रः कुपितः ।

—किमिच्छसि ? किं मम अशान्तिः ते कामना ? किं मे जीवनस्य विपर्ययस्ते काम्यः ? किमस्य गृहस्य ध्वंसः तव अभिलाष· ?

—नहि……नहि …… । मैवं वदतु । नेयं मे कामना…… । भवान् सुखी भवतु । अन्यथा पुत्रो मे…पुत्रो मे…… ।

सहसा शन्नोदेवी मूर्च्छिता । पूर्वरोगस्य आविर्भावमनुभूय कुलभद्रः शङ्कितः । ततो विश्रामनिवासे शन्नोदेवी उपचारार्थं सन्निवेशिता । अवनी आत्मनः संकल्पं नवीकृत्य सेवातत्परा अभूत् । शन्नोदेवी तु चिराय पीडिता ।

तद्दिने अवनी व्याकुला आसीत् । समीपे कुलभद्रं प्राप्य कोपशोकविह्वला सा अवदत् ।

—कथं भवता ज्येष्ठदेवी भर्त्सिता ? किमर्थं सा उत्क्षिप्ता ? मदर्थं …नु ? किमिदं भवत्समीपे मया निवेदितम् ? अथवा स्वाधिकाराय प्रतिवाद उत्थापितः ? तर्हि, किमर्थमिदं भवान् कृतवान् ? किमर्थं सा मूर्च्छिता ? तस्या पीडार्थं कथं मां निमित्तीकृतवान् ?

—नहि, अवनि ! नैतत् तथा । आश्वस्ता भव । सर्वमहं बोधयिष्यामि ।

—नहि,··· भवान् निजवचनं प्रथमतः प्रत्याहरतु। सा मे ज्येष्ठा भगिनी। शुभाङ्को मे पुत्रः। कदाचिदपि शुभाङ्कोपरि मे स्नेह-न्यूनता दृष्टा वा ?

—जाने···अवनि··· ! जाने सर्वम्। शुभाङ्कस्य ममता त्वयि अधिक-तरा इत्यपि अवहितोऽस्मि। आश्वस्ता भव।

अवनी अवाध्यभावेन विलपितुं प्रवृत्ता। कुलभद्रो व्यस्तोऽभवत्। सर्वमपि तस्य सान्त्वनावचनं वधिरितम्। समयेऽस्मिन् अपर प्रकोष्ठतः शन्नोदेवी शनैरागतवती। अनुच्चस्वरेण अवोचत्।

—अवनि··· ! अवनि···।

सहसा अवनी विलापतो विरता।

शन्नोदेवी सम्मुखमागता।

—भगिनि··· ! किमर्थं विलपसि ? नाऽहं दुःखिता। पीडिता तु भाग्यदोषादेव।

अवनी तस्या वक्षःस्थले मस्तकं निधाय उच्चैः रोदनं कृतवती। शन्नोदेवी अपि लोतकविन्दुभिः तस्याः सीमन्तं आर्द्रीकृतवती। उभ-यस्य आलिङ्गने कुलभद्रो विस्मित आसीत्।

चतुर्विंशति वर्षाणि व्यतीतानि।

शुभाङ्कोऽद्य पूर्णयुवा। इदानीं स गुरुकुले निवसति। आगामिवर्षे समावर्त्तनं समाप्य प्रत्यागमिष्यति। किंतु ज्येष्ठदेवी इच्छति अस्मिन् वर्षे तस्य विवाहो भवतु। अतः सा जन्मदिनपालनं निषिद्धवती। इतः प्रभृति विवाहदिनस्य गुरुत्वम्। एवं चिन्तयन् कुलभद्रः अवसन्नः।

अतीते नैकाः प्रतिश्रुतयः। वर्त्तमाने संकल्पो विकल्पमध्यस्थः। भविष्यन्तु अभिलाषमयम्। मथ्यमानः कुलभद्रो दुर्बलः। अग्रे तस्य पूरणमपेक्षमाणा कतिपये इच्छानां समष्टिः···। कियन्तः प्रायोवादाः ···केचन प्रतिवादाश्च अभ्यासविमुखाः।

संप्रति अवनी दृढा।

सा गृहपत्नी। अधिकारस्य मुख्यरज्जुः तस्या हस्ते। सा यदिच्छति तदेव भवति। सर्वेऽपि कर्मकराः तस्या आदेशं प्रतीक्षन्ते। तदनुसारि च कर्म प्रासादे प्रचलति। सदा तस्या मुखे एकैव वाणी।
—अनन्तः अस्य गृहस्य प्रभुः। ......न शुभाङ्कः।
कुलभद्रः खिन्नः।
तदानीं सा आसीत् सहनरूपा अवनी। किन्तु सा जननी नाभूदिति मुखे तस्या ग्लानिलेशो मार्मिक आसीत्। सा बहुविबोधिता। नाना रीत्या च आश्वासिता। प्रतिकार्यं च पत्युः समीपे सम्पादयितुं निर्देशिता। सा अपि तथा कृतवती। अन्ततः तस्याः कामना पूर्णा। सा जननी अभवत्। अङ्के अनन्तं प्राप्य सा गृहवत्सला संजाता। गृहस्य सर्वाऽपि सामग्री तदधीनं नूतनरूपं प्राप्तवती। परमिदानीं सा अनभिप्रेतम् अभिलषति। किमनेन अनन्तः सुखी स्यात्!

अनन्तः किशोरः। बालकीया तस्य मतिः। एतदृशाऽभिलाषस्य सन्निवेशः तस्मिन् न कदाचित् मङ्गलाय भवेत्। अधिकारभारो यदि कस्योपरि बलात् समर्प्येत न तदा स योग्यो भवेत्। अपितु अकर्मण्यः संजायते। भारार्थं स समर्थो वा? उपयुक्तो वा अयं भारो न्यासाय? सर्वमेतत् किमर्थं न विचारयति अवनी? इच्छापोषणमात्रेण वा किमस्ति? किमनेन गौरवं वर्धते? पितुरङ्के तु सर्वाऽपि सन्ततिः वात्सल्यस्निग्धा। कनिष्ठोऽपि अनन्तः पुत्र एव। तदर्थं व्यवस्था तदनुरूपा। कथमद्य अवनी अनर्थं द्रढयति? अधिकारस्य उच्छेदस्तु अयोग्यतः.... । तर्हि, किं शुभाङ्कः अयोग्यः? असमर्थः सः?
कालो विलयवधिरः।

शुभाङ्कः प्रवासी। गृहस्य विषयराशिः तदर्थं क्षीणप्रभः। जनकः तन्निकटे सत्यस्य अवतारः। जननी च वासल्यमूर्त्तिः। तयोः निर्देशः मङ्गलस्य मार्गः। संप्रति तु आश्रमस्य परिवेशः तस्य संसारः। तत्रत्य जनाः परिवारः। केचन आत्मीयाः। केचन परिजनाः। केचन गुरुजनाः। नाना अत्र अतिथयः। श्रमोऽत्र प्राणिनां कृते। शिक्षा च जीवनस्य कृते।

समूहचर्चा इह अभिवृद्धये। आहरणीयं नाम ज्ञानमेव। ज्ञानं च आनन्दाय केवलम्।

शुभाङ्कोऽत्र प्रियः। पुनश्च बन्धुवत्सलः। उपार्कः तस्य बन्धुः। उभयस्य मनोभावः संकल्पमूलः। उभयस्य अभिलाषे मौलिकपरीक्षा एव विषयः। यथार्थनिरूपणं तत्त्वम्। सत्यकामतर्कणायां संस्कारस्य कर्कशप्रसरः उभयोरभिप्राये भूरिभारः। उपार्कस्तु चञ्चलः। आश्रमस्य आभोगः तस्य प्रेरणास्रोतः। अत्रत्यकर्मसमूहः तस्य उत्साहस्य सामग्री। अत्रैव स वृक्षं रोपयति······वर्धयति······ कुसुमोद्गमस्य प्रहरं च प्रतिपालयति। शून्यमन्दिरं परिष्करोति। पुनश्च सज्जीकरोति। सन्न्यासिनां कृते अग्निचयनं करोति। भस्मानि वितरति। अभ्यागतान् च सत्करोति।

सायंकाले शुभाङ्कः पूजनमायोजयति। प्रवचनस्य प्रारूपं निरूपयति। सन्न्यासिनां शुभाशुभं जिज्ञासते। गुरून् शुश्रूषते। सन्देहं च परिपृच्छति अन्ततो मुक्तभावेन हृदयं निवेदयति। ततः शय्यायां नेत्रं निमीलति।

ततो भासते······धूमराशिः······आश्रमस्य प्रतिकोणम् अग्नि-संचयनस्य प्रचलितव्यवहारः······कमण्डलुजलस्य आबद्धतरङ्गः······ दण्डायितसन्दंशस्य साङ्केतिकसाक्षिस्वभावः······भस्मविलेपितदेहे कौपीनसर्वस्वो मौनी······पुनश्च पर्यटकीया क्लान्तिः···।
निशा मौनपीयूषा।
जागरणे प्रीतिधर आश्रमः। उपरि तारका शून्यरसिका। परितो त्रिजनता अभिसारिका। प्रतीक्षास्वभावे तमसा स्वयं विभीषिका। होमसंस्कृतिः वैराग्य-वैष्णवी। जपक्रमः रुचिशीलः। विजातीयध्वनि-स्तोमः अनन्तरभावे परिवर्तनस्य सामग्रीं संचिनोति।

शुभाङ्कमनसि अतीतस्य स्मृतिलिपिः। स प्रथमतया पितृभ्यां सह अत्र आगत। यदा आश्रमस्य आभोगं प्रविष्टः तदा मुग्धः संजातः। आकुलतया स कुसुमवनं प्रति अधावत्। अतीव प्रसन्नोऽभूत्।

मुक्तभावेन इतस्ततः समचरत्। तदानीं न कोऽपि तं वारितवान्। किन्तु सहसा पिता विरक्तिभावं सूचयन् दमयितुमारभत।

— शुभाङ्क ! किमेतद् भवति ? किमिदं गृहम् ?

ततः कश्चन कौपीनधारी सरलगिरा अवदत्।

— नान्यथा चिन्तयन्तु। बाला हि कुसुमसमप्रकृतिकाः।

कुलभद्रो नम्रः संजातः।

— नहि···। न तेन एतत् कर्त्तव्यम्। आश्रमपदमिदम्।

—भवतु··· । अतिथीनां स्वागताय एव एतत्।

कुलभद्रस्य दृष्टिः शुभाङ्कोपरि आसीत्। पुनः स आदिष्टवान्।

—शुभाङ्क ! न तत् चेतव्यम्।

तदानीं शुभाङ्कः कति पुष्पाणि अव- चितवान्।

कुलभद्र व्यस्तः संजातः।

—पश्यतु···पश्यतु···, इदानीं स उपवनं नाशयिष्यति। कृपया कियन्ति पुष्पाणि दत्त्वा तं निवारयतु।

रहस्यमयहास्ये कौपीनधारी उदासीनः संजातः।

—कियन्ति वा स चेष्यति ? कियद् वा नाशयिष्यति ? नूनं वितृष्णो भूत्वा प्रत्यागमिस्यति।

वचनमुखेन कौपीनधारी शुभाङ्कमुपगतः। तेन सह च कानिचन जरत्पुष्पाणि अवाचिनोत्। तत् सर्वं तस्मै दातुमुपक्रान्तः। किंतु शुभाङ्कस्य हस्ते स्थानं रिक्तं नासीत्। तथापि एतद्रष्ट्वा स प्रमुदितः। हर्षेण च अवदत्।

— सर्वम् आनयतु। आगच्छतु······आगच्छतु मत्पश्चात्।

शुभाङ्कः क्रमशः मन्दिरसमीपं गतः। तत्र च चत्वरे सर्वं संस्थापितवान्। जरत्पुष्पाणि पृथक् कृत्य तस्मै पुनरर्पितवान्।

— गृह्णातु···। देवोपरि भवान् तत् समर्पयिष्यति। अहं च एतत् समर्पयिष्यामि।

कौपीनधारी अहसत्।

— अत्र देवो नास्ति ।

— किमस्ति ?

— शून्यमन्दिरम् ।

— शून्यमस्ति ? भवतु··· । तदुपरि···।

शुभाङ्कः हासमुखेन तत्र अधावत् । कुलभद्रः विस्मितः । शन्नोदेवी मनोमग्ना । मनो विभु । मनः अणु । यदा तत् आत्मनि निमज्जति तदा सुषुप्तिः । यदा च ततो निःसरति तदा विज्ञानोत्पत्तिः । यदा तस्मिन् लीयते तदा उपलब्धिः । उपलब्धिर्नाम साक्षात्कारः । साक्षात्कारः···आस्थानस्य···संस्थानस्य ·····अधिष्ठानस्य······।

इदानीमपि शुभाङ्कः अनुभवति—उद्यानेऽस्मिन् नाना पुष्पाणि विकसन्ति । सौन्दर्यं वितन्वन्ति । एषु न गुरुलघुग्लानिः, न वा अल्प-वृहदभिमानम् । न वा ते परस्परमार्गरोधे स्पर्धालवः । एषु संघर्षो वर्त्तते । किन्तु प्रतिपक्षता नास्ति । तथैवाऽत्र निर्झराणां प्रवाहः । ते सदा पुरः सरन्ति । परं न कोऽपि कस्य मार्गं प्रतिरुणद्धि । अपरं तु सम्मील्य प्रवहन्ति···तावत् यावत् समुद्रो नाधिगतः । स्पर्धाऽत्र कीदृशी ? इह वटद्रुमो महान् । नाना दिग्देशात् आगत्य पक्षिणोऽत्र निवसन्ति । नानाकाराः नानावर्णास्ते । सौमनस्ये क्रीडन्ति । वैमनस्ये कलहायन्ते । किन्तु न कश्चित् वृक्षं छिनत्ति भिनत्ति वा । कीदृशीयं जीवनधारा ? मनुष्यस्तु यत्र गच्छति तत्र प्रथमतो निजवसतिं दूषयति । प्रभुत्वं न्यस्यति । अधिकारं द्रढयति । यत् रुचिरं पश्यति तत् निजसात्कर्त्तुं सीमाङ्कनं करोति । अन्ततः अहंकारे निमज्ज्य वास-स्थानमपि अवधूय यायावरायते । ततश्च मनोविकारे अनुभवः शून्य-गर्भः । संस्कारो विपरीतक्रमः । त्रैकालिकसंसर्गो निष्प्रतियोगिकः । उपार्कः स्फूर्तिमान् ।

. .

तदर्थं ऋतोदरा उपवनस्य रचनाचर्चा । कुसुमलीला च मौलिकी कला । रूपरहस्ये रमणीयता पुनः सनातनगीतिः । तस्य च व्यापृतिं बहुवर्णयति नीलनगस्य विशालसुषमा । पुलकं च पिञ्जयति स्मृति-पुञ्जस्य क्रमच्युतप्रभा—

एकदा आश्रममुपगतः कश्चित् कुलीनः। नाम्ना उपकण्ठः। प्रभावशाली स उत्तरवयस्कः। सपरिवारः सः अवसरविनोदने व्रती आसीत्। आश्रमपरिदर्शने तस्य आभिजात्यं वर्धयति स्म कन्या अभिधा। साक्षादेका निरुपमवाक्यशिखा···अभिषेकस्य तिलकलेखा ·· तर्पणस्य विशुद्धमालिका···चन्द्रशालायां वलयकलिता एका अविमृष्ट-पारावतपालिका······। सेयं रूपयति उपवनम् उपार्कसम्मुखे।

उपार्कस्य निविष्टनयने संप्रति अभिधा एका श्लेषकथा। दीर्घ-केशे तस्या लहरीमाहरति आश्रमसरः। आज्यपात्रस्य होमसंपर्कं सूचयति नयनधारः। पल्लवविधाने अधरं प्रथते सहकारः। चरण-चिह्नम् अवचिनोति आश्रमस्य रजःप्रसरः। निजनिमज्जनं विजनयति तस्या वेशप्रकारः।

तदानीं शुभाङ्कोऽपि निकटे उपस्थित आसीत्। किन्तु अभिधा उपार्कमुपगम्य अपृच्छत्।

—भवान् अत्र कियत्कालं स्थास्यति ?

उपार्कः सरलभावेन अवदत्।

—न चिरम्।

अभिधा अस्फुटमहसत्।

उपार्कः अपृच्छत्।

— किंतु भवती ?

— न चिरम्। तथापि उपवनमिदम् उपभोक्तव्यं खलु ?

— नूनम्······।

— तर्हि,······तावत् पर्यन्तम्।

ततः सा शुभाङ्कमुपगता। मन्दं च अहसत्।

— भवान् अत्र······?

— कर्मसमाप्तिपर्यन्तं निवस्तु मे योजना।

— कदा समाप्तिः भवेत् ?

— यदा भवत्या उपभोगसमाप्तिः।

अभिधा चकिता ।

— अहो, चतुरो भवान् !

— नहि, आतुरः ।

अभिधा मनाक् विस्मिता ।

— किम्भूतः······?

— यथेच्छं चिन्त्यताम् ।

— दुःखातुरः सुखातुरो वा ?

— उभयथा······।

— तर्हि, व्यथातुरः······?

— नहि, कथातुरः ।

अभिधा विरक्ता अभूत् । उपेक्षया अन्यत्र प्रस्थिता । शुभाङ्कः भृशमहसत् । उपार्कः हास्यमुपसंहृत्य तामन्वसरत् । तस्याः पितरं मातरं च आश्रमविषये बोधयितुमारभत । इतस्ततश्च अदर्शयत् । यथारुचि वस्तूनां गुरुत्वं प्रत्यपादयत् । आश्रमस्य इतिहासं व्याहरत् । गुरूणां महत्त्वं व्यवृणोत् । अन्ततः विसर्जनवेलायां स एव आतिथेय आसीत् । तदा विसर्जनवचनच्छलेन अभिधा अपृच्छत् ।

— किं स भवदीयोबन्धुः ।

— सहाध्यायी······नाम्ना शुभाङ्कः ।

— भवान्······।

— उपार्कः ।

— शोभनम्······।

अभिधा अहसत् ।

सामान्यपरिपृच्छातले इदानीमपि अभिधा उभयोः विवादीया तरुणी । शुभाङ्कस्य मनस्तन्त्रे सैव प्रथमा तंत्री । सैव अनुभव-विश्लेषणस्य आधारशिला । सकलप्रतिभाने सैव वीजारण्ययोः स्नेहसमाहारः । आरम्भलिपिरचनायां सैव संसारस्य दायभारः ।

शुभाङ्कतर्कणायां विदग्धबोधः ।

एकत्र अभिधा। अन्यत्र मन्दिरस्य शून्यभावः। अनुभवसमन्वये तु पदार्थायते अभावः। नायं भावविरोधी। न वा भावप्रतिलिपिः। न तु वा परकीयस्वभावः। न पुनः सत्ताबोधविधुरः। न कदाचिदयं भावभिन्नः। परम् अतिरिक्तः। विरहसादृश्ये अभूतपरिकल्पः। विभुभावे ऋतरूपः।

अद्य पुनः कुलभद्र आश्रमस्य अतिथिः।

पार्श्वे तस्य प्रियतमा अवनी। तस्या एव मनः परिवर्त्तयितुं कुलभद्रः तामिह आनीतवान्। तस्य आभिमुख्ये तु कार्यद्वयम्—पुत्रस्य दर्शनं भवेत्। पत्न्या अपि मनःपरिवर्त्तनं भवेत्। अतः प्रथमतः स विद्यार्थि-निवासे उपस्थितः। उभयमेकत्र विलोक्य शुभाङ्कः हर्षमुपगतः। गृहाचारं पुरस्कृत्य स प्रणतवान्। अवनीनयने आनन्दस्य अश्रु उच्छलितम्। कुलभद्रो गद्गदः संजातः।

शुभाङ्कः अपृच्छत्।

— गृहे सर्वे कुशलिनः? ज्येष्ठमाता कीदृशी अस्ति? अनन्तः कथं वर्त्तते?

अवनी स्मितमुखेन अवदत्।

— सर्वे कुशलिनः। त्वमिह तु शुष्कः प्रतीयसे। किमभूत्…? स्वास्थ्यं समीचीनमस्ति वा?

— हम्…। समीचीनम्।

— अध्ययनभारः अधिको भवति वा?

— नहि।

— तर्हि, उदासीनः कथम्?

— नाऽहमुदासीन। तव नयने दिनव्यवधानमस्ति खलु! तदर्थमित्थं प्रतीतिः भवति।

— किमत्र भोजनादीनां व्यवस्था ··?

शुभाङ्कः वचनमिदं प्रतिरुध्य अवदत्।

— नहि, सर्वमत्र शोभनम्।

कुलभद्रः किंचित् चिन्तित आसीत्।

— अपि सन्निहिता अत्र गुरुचरणाः ?
— हम्··· । सन्त्येव ।
— दर्शनं मिलिष्यति वा ?
— अहं पश्यानि, कस्तत्र वर्तते ?
— माऽस्तु । मिलित्वा गमिष्यामः ।
कुलभद्रः पुरः सृतः । पुत्रेण सह अवनी तमनुसृतवती । शून्यमन्दिरस्य अपरपार्श्वे गुरुर्निवासः गुह्यते । द्वारपार्श्वे गैरिककौपीनं परिशुष्यति । मुक्तकौपीनः अलेखः प्राकृतिकः । योगमुद्रायां च आसीनः । सहसा कश्चित् सन्न्यासी कौपीनं समर्प्य अभ्यागतस्य आगमनं सूचितवान् । अलेखः शनै अतिथिभवनम् आगतवान् । प्रणामपुरःसरं दम्पती विनीतौ । शुभाङ्कः वहिः प्रतीक्षार्थं पित्रोरादेशं प्रार्थितवान् । कुलभद्रः अलेखस्य मुखं पश्यन् स्थिरः ।
अलेखः अनुमतवान् ।
— अस्तु ।
शुभाङ्कः प्रस्थितः ।
अलेखः कुशलमभ्यलषत् ।
— कुशलिनः सन्तु ।
कुलभद्रः अनुनयो ।
— किंचित् वक्तव्यं प्रार्थयामि ।
अलेखः प्रसन्नः ।
— कथयतु ।
अवनी निवेदितवती ।
— ज्येष्ठदेवी अत्यन्तमुन्मादिनी । सा इच्छति ऐषमः पुत्रस्य विवाहो भवतु । निकटग्रामे अस्ति कश्चित् श्रेष्ठी । कुलीनः सः । उपकण्ठ इति नाम । तस्य च एकैव कन्या···अभिधा इति । तामेव ज्येष्ठदेवी इच्छति । उपकण्ठोऽपि एतदर्थं बहुवारमागच्छति । ज्येष्ठदेवीं च प्रचोदयति ।
— ततः··· ?

— उपकण्ठो वदति, 'अनेनैव विवाहेन तस्य कुलरक्षा भवेत्' । पुनश्च अनुमोदयति, शुभाङ्कः यत्र इच्छेत् तत्र निवस्तुं प्रभवेत् । अयमधिकारः शुभाङ्कस्य एव ।

अलेखः अहसत् ।

— तर्हि···, भवती इच्छति, 'उभयस्य कुलरक्षा भवतु' ।

— तदेव ।

— किमिच्छति कुलभद्रः ?

कुलभद्रो नम्रः ।

— भवान् सर्वं जानाति । ज्येष्ठदेव्या इच्छा तु मम इच्छैव ।

अलेखः पुनरहसत् ।

— शुभाङ्कस्य बन्धनं वा विमोचनमिच्छति भवान् ?

— यथाज्ञा भवेत् ।

अलेखः किंचित् चिन्तितः । पर्यटकमनसि तस्य संलग्नः अद्यतन सन्दर्भः ।······विवाहो नाम कतिपयसामग्रीणां स्थानान्तरीकरणम् । गृहतः अपरगृहम्···देशतो देशान्तरम् । तदनु न्यूनीभावः । पुनस्तदर्थं विक्लवबोधः । ततः संपर्कः कलहमलिनः ।

अलेखस्य नीरवभावमालक्ष्य अवनी प्रार्थितवती ।

— पुत्रः बहिः प्रतीक्षते । तेन सह आश्रमदर्शनाय······

— गच्छतु भवती । यथेच्छं परिपश्यतु ।

अवनी शनैः उत्थाय बहिरागतवती । शुभाङ्कः सहर्षमपृच्छ ।

— पिता······?

— चर्चते । अहं तु परिदर्शनाभिलाषेण आगतवती । किमत्र विशिष्टम् ? परिदर्शय माम्······

मात्रा सह संप्रति दूरविरहं परिपूरयति शुभाङ्कः । अपि समीपे पुत्रमासाद्य गौरवान्विता । मधुरमनोरथे उभावपि प्रसन्नौ । शुभाङ्कः इतिहासमुदाहृत्य प्रतिपदम् आश्रमस्य वैशिष्ट्यं प्रतिपादयति । पुत्रस्य ज्ञानगुरुत्वं समुपलभ्य अवनी उत्फुल्ला भवति ।

कुलभद्रस्तु अलेखनिकटे मुग्धवाक् ।

— महात्मन् ! शुभाङ्को मे प्रियतमः । स एव शन्नोदेव्या द्वितीय-जीवनम् । तस्य सुखं दृष्ट्वा वयहिम सुखिनः । यदि विवाहनिमित्तं भवतः अनुमोदनं न स्यात् तर्हि शन्नोदेवी जीवनं न धारयिष्यति ।

कुलभद्रः विह्वलः संजातः ।

अलेख आश्वासितवान् ।

— अनुरोधम् अनुमोदयामि ।

वाष्पगद्गदः कुलभद्रः अलेखस्य चरणोपरि मस्तकं निधाय भृशं व्यलपत् ।

अलेखः सान्त्वनामुखेन अवोधयत् ।

— शान्तो भवतु भवान् । सन्मार्गगामी भवतु । पश्यतु, सर्वस्य विच्युतिः सम्भवेत् । सत्यस्य तु च्युतिर्नास्ति । सत्यं हि जीवने एकैव नीतिः । तामेव परिपालयतु । सर्वं समञ्जसं भूयात् ।

कुलभद्रः प्रकृतिस्थः संजातः । सामान्यसन्दर्भे उज्जीवितः प्रतिज्ञापितो दिवसः । तद्दिने स शुभाङ्कनिमित्तं कियान्न प्रार्थनाकातर आसीत् ? तस्य च जीवनरक्षार्थं तमपि समर्पितवान् । असहायमुहूर्ते तस्मिन् संकल्पो द्रढीयान् आसीत् । प्रवृतिप्रकारः सत्यकाम आसीत् । अभिप्राय उत्सर्गप्रिय आसीत्......पुत्रो मे नारकीयः कश्चित् नरो न भवतु । स भवतु महात्मा.....उदारचरितः कश्चित् समदर्शी । त्रितापस्य ऊर्ध्वे स्थित्वा स कालजयी भवतु । सनातनस्य करुणाधारा तस्य पथप्रदर्शिका भवतु ।

अद्य तु वात्सल्यनिविडहृदये तस्य प्रलिप्तटिप्पणी - पुत्रोऽयं मम । मम सेवां करिष्यति । मम गौरवं प्रथयिष्यति । ममादर्शेन कुलोज्ज्वलं करिष्यति । मम च आभिजात्यं वर्धयिष्यति ।

कुलभद्रः प्रस्थानानुमतः ।

किन्तु अवनीशुभाङ्कयोः व्यवहारे स चमत्कृतः वात्सल्यगौरवा अवनी नदीमुखे साक्षादेका ऊर्मियूथिका । शुभाङ्कस्तु सन्तरणस्नेही मीननायकः । उभयोश्च जलीयात् कश्चित् संपर्कं अनन्तप्रेमी । किम्

अवनी परिवर्त्तिता ? नूनम् । सा जननी । स्वयं क्षीरलोतकयोः अविनामूर्तिः । अनुगमसंगमयोः मुग्धसमाहुतिः । प्रभुविभुमध्यस्था काचित् प्रणयप्रकृतिः ।

विसर्जनं निवेद्य शुभाङ्को निवर्त्तितः ।

प्रस्थानसरणिमुपगतः कुलभद्रः । अवनी प्रसन्ना आसीत् । कुलभद्रः किंचित् विचिन्त्य अवदत् ।

— तर्हि किं करिष्यामः ?

अवनी न्यरूपयत् ।

— ज्येष्ठदेवीचिन्तानुरूपं कार्यं भवतु ।

— विवाहदिवसः अवधारणीयः खलु ?

-- तत्र का चिन्ता ? उपकण्ठेन सह वार्तालापः कर्त्तव्यः ।

— तदर्थं प्रथमतः सन्देशः प्रेषणीयः ।

— भवतु… …।

— किन्तु विवाहानन्तरम्… ‥

— शुभाङ्कः तत्र स्थास्यति ।

— कुत्र……?

— उपकण्ठस्य गृहे……।

— अवनी ?

— उपकण्ठ एकाकी । पुनश्च तस्य अपरिमिता सम्पत्तिः । तत्र स्थित्वा शुभाङ्कः दायित्वं निभालयतु ।

— अवनि…!

— अत्र द्विधा कथम् ? वर्षद्वयानन्तरम् अनन्तोऽपि समर्थः स्यात् । सर्वमत्र स सम्यक् चालयिष्यति ।

— अनन्तः……?

— नूनमेव ।

— किन्तु शुभाङ्को मे ज्येष्ठपुत्रः……।

— भवतु नाम । न तत् संपर्कं प्रतिरुणध्मि ।

— नैतन्मे रोचते ।

— किं तर्हि, उपकण्ठस्य गृहे स्थित्वा सः कनिष्ठः स्यात् ?
— नैव । नैतन्मे तात्पर्यम् ।
— ज्येष्ठ इति किं स सर्वस्य प्रभुः स्यात् ?
— न तद् वच्मि ।
— तर्हि, किं कथयति ?
— अनन्तस्य चिन्ता तु पश्चात् करिष्यते ।
— किमर्थम् ? स पश्चाज्जात इति हेतोः ?
— नहि……। ज्येष्ठस्य सम्मानं तु अस्माकं परम्परा ।
— तर्हि… …, कनिष्ठो हेयः ?
— नैतेन तस्य अवमानम् । न वा अपमानम् । किन्तु कनिष्ठस्य मर्यादा भिन्ना ।
— नाऽहं किंचित् श्रोतुमिच्छामि । अहं गृहिणी । यन्मे रुचिः तदेव भविष्यति ।
— कथमेतत् स्यात् ?
— तदर्थमुपाय उपस्थापयिष्यते ।
— नैव…नैव…। भाविनि काले भ्रातृविवादनिमित्तं त्वमेव कारणं भविष्यसि ।
— तर्हि, अनन्तः किं दासीपुत्रः ?
— मैवं वद, अवनि……।
— पश्यतु, अनन्तो यदि हेयो भवेत् तर्हि विवादाय भवान् एव कारणं स्यात् ।
— अवनि……। कथं सदा अनर्थमुपस्थापसि ? नैतत् शोभनम् । सम्यक् चिन्तय……। सम्यक् विचारय……।

कुलभद्रस्य विकृतमुखं विलोक्य अवनी अवनता । कोपमवदम्य कुलभद्रः किंचित् पराङ्मुखः संजातः । दीर्घश्वासे तस्य तालममेलयत् शन्नोदेवी । तस्याश्च गोपनभाषितं संप्रति पुनर्जीवति—'पश्यतु, इत्थं पीडिताऽहं भवन्नयनतः अपैष्यामि । भवानेव शुभाङ्कस्य पिता, माता अपि । बालो मे मदीयस्नेहं न प्राप्तवान् । तथापि, तदर्थं भवतः

स्नेहाभावो न भवतु। अन्यथा पुत्रो मे कुलस्य कलङ्को भवेत्।

कुलभद्रः तदा उदासीन आसीत्। सजलनयना शन्नोदेवी सतृष्णमवदत्—'मम देहं संस्पृश्य प्रतिश्रृणोतु। वचनमिदं रक्षिष्यति नु?' कुलभद्रः तदा सत्यबद्धः संजातः—'न कदाचित् शुभाङ्क उपेक्ष्यो भवेत्। सत्यं मे वचनम्। नेदम् अन्यथा भवेत्।

कुलभद्रो विमर्शविलीनः।

किम् अवनी छलनया शुभाङ्केन सह व्यवहरति? विषकुम्भपयोमुखेन वात्सल्यं वितरति? हास्यमुखेन प्रभुत्वं विशदयति? अथवा अभिनयेन प्रौढिं प्रख्यापयति? अहो, व्यवहारवृत्तिः। मुखमनसोः कियन्न व्यवधानम्? हृदयं च कियन्न संकीर्णम्? उदात्तचरिते कियती न विच्युतिः?

चिन्ताकान्तारे प्रस्थानसरणिः ह्रस्वापन्नः। दाम्पत्यमौनम् अङ्गीकृतवती दिवसस्य विश्लथरतिः। छायां तमीकृतवती दूरपर्वतस्य कटितटी। सायन्तनसामञ्जस्यं व्यभिचरितवती नैशस्पृहा।

अवनी वेशं पर्यवर्त्तयत्।

इदानीं भारो लघुः। कुलीनता प्राकृतिकी। सुप्तिरेव मुक्तिः। विस्मृतिश्च शान्तिः। अञ्चलपरिमले रङ्गविभवः सङ्गशून्यः। पातिव्रत्यप्रकरणे अङ्गतरङ्गः पङ्गुः। वयो हि तारुण्यावरोहे कण्ठलग्नम्।

समयस्फुरणायाम् अभिधा कादम्बिनी।

प्राचुर्यस्य अन्तःकरणे सा अभावमेव आविष्करोति। परितः परिचारिकाः। पार्श्वे विश्वस्ता धात्री। परामर्शस्थाने वृद्धपिता उपकण्ठः। माता तु सद्यो दिवंगता। तदीया स्मृतिः पिताकन्ययोः पुण्यचर्चा। मन्नातुरभिलाषपूरणाय पिता वरचयने पर्यटकः। सा स्वयमपि स्वप्नराज्ये परिव्राजिका।

विषयं विना सत्यं तु अप्रकाशमेव। तथापि अभिधा प्रकाशस्य सौख्यमनुभवति। स्पन्दनम् आस्वादयति। आत्मनि पुलकं पिञ्जयति।

किमपि निराकारं साकारीकरोति। ततः प्रतीक्षते। प्रतीक्षापरिभवेऽपि परिवेशः तस्या मातृत्वम् उद्रेचयति। श्रवण च अन्वर्थतामिच्छति शिशुव्याकरणस्य प्रथमव्याहृतिः 'मा···ता···'।

परिचारिका विज्ञापितवती।

—कश्चित् दर्शनमिच्छति।

अभिधा चञ्चला अभूत्।

—पितुः दर्शनम्··· ?

—न जाने···।

—भवतु। तं प्रवेशय। सभाजनगृहे च उपवेशय। अभिधा दर्पण-सम्मुखे अङ्गरागं निरीक्ष्य वेशवसनं च सज्जीकृत्य सभाजनगृहं प्रविष्टा। किंचित् गम्भीरभावेन अपृच्छत्।

—कमन्वेषयति भवान् ?

—पितृपादाः सन्ति गृहे ?

—न सन्ति···।

—तर्हि, कदा साक्षात्कारः सम्भवेत् ?

—श्वः आगच्छतु।

—कः समयः ?

—अपराह्णे आगच्छतु। किंचित् निवेदनीयमासीत् ?

—अस्त्येव।

—तर्हि, कथयतु। अहं निवेदयिष्यामि।

—उपार्कः चिन्तामग्नः।

अभिधा अपृच्छत्

—भवतः परिचयः ?

—अहम् उपार्कः।

—अरे···, भवान्···वनवासी···?

—नहि, आश्रमवासी।

—हम्···, सम्यक् स्मरामि। तस्यैव उपवनस्य अन्तिमाश्रमे खलु ?

—नहि, प्रथमाश्रमे।

—मन्ये, उपवनस्य अन्त्याश्रमः सः।

—नहि, अन्तिकाश्रमः।

—भवेत्…। सर्वं तु विस्मृतं मया। इदानीं स्मारितम्। अस्तु…। कथं वर्त्तते भवतः सुदृत्?

—सम्यक्।

—अतीव चतुरः सः।

—सत्यम्।

—भवानपि तथा।

अभिधा अहसत्।

—अस्तु…। तमानीय कदाचित् आगच्छतु।

—नूनम्…आगमिष्यामः।

समयेऽस्मिन् उपाहारमानोय धात्री उपस्थिता। चत्वरिकायां सज्जीकृत्य सविनयं प्रसारितवती। अभिधा आतिथेयीवचनेन न्यवेदयत्।

—गृह्णातु।

कुलीनपरिचर्यायां नितराम् अभिभूत उपार्कः। स मनाक् उपहारं मनाक् च अभिधां विलोक्य तटस्थः। विलोकने तस्य विलिम्पिता किंचित् सौन्दर्यतृष्णा…स्तोकम् अनुरक्तिः। पुनश्च प्रहेलिका अभूत् अभिधाया मुखाकृतिः। तस्याः स्मिते संलग्नं मनः। नग्नं च हृदयम्।

पर्वतचरणे विहरति शुभाङ्कः। स्थावरजङ्गमयोः सङ्गमं चिन्तयन् स विभुप्राणः। विशालविग्रहे पर्वतोऽयं स्थावरः। सत्यप्रख्यापनाय किम् अभिशप्तोऽयं नटवरः? अथवा न्यायप्रतीक्षायाम् अभियुक्तः कश्चित् दण्डितकलेवरः? किंवा वैशाल्यवितरणाय साक्षी कश्चित् मुमुक्षुप्रवरः? अथवा कालान्तरप्रणयी कश्चित् कामनाजर्जरः?

स्मितमुखेन उपगत उपार्कः। अनुमितिमुपन्यस्य शुभाङ्कः तरलितः। उभयस्य मिश्रहास्ये अभिधाऽभूत् अर्थप्रकृतिः। शुभाङ्कः सस्नेहमपृच्छत्।

—का वार्त्ता··· ?

—निमन्त्रणमस्ति ।

—कस्य··· ? कदा··· ?

—तस्याः··· । यदा कदाऽपि ।

—भवतु एकदा ।

—दिनं निश्चिनुहि ।

—पश्चात्··· ।

—कथं पश्चात् ? इदानीम्···

—नायं कालः ।

उपार्कः विरतः । अभिध्रायाः स्मृतिनेपथ्ये पुनरङ्कुरिता एका विजन-स्मृतिः । अस्मिन्नेव गिरिचरणे उपार्कशुभाङ्कयोः प्रथममैत्री अन्तरङ्गा अभूत् । उभयहृदये अत्रैव वासन्तिकमिलनं सामीप्यमाहरत् । इहैव उभयोः मिश्रभावः बन्धनविन्दुं दृढीकृतवान् । तदानीं सत्यपा उभयोरात्मा ऐक्यापन्नः ।

शुभाङ्कः अवदत् ।

—बन्धो ! भावोऽयं चिराय जीवतु ।

उपार्कः भावगद्गद आसीत् ।

—नहि । एतावति न समापय । मनुष्यो विकृतवाक् । मनश्च विस्मृतिशीलम् । वचनं स्खलनप्रियम् ।

—तर्हि, किं करिष्यामः ?

—सत्यमेव साक्षीकुरु ।

—सत्यं नाम वचनमेव ।

—तदेव भवतु ।

—तर्हि, कथय ।

—अहं सत्यमुखेन शपथं करोमि ।

—किम्··· ?

—त्वं यदा यच्च कामयिष्यसे तदहं पूरयिष्यामि ।

—अहमपि तव कामनां पूरयिष्यामि। सत्यमिदं मे वचनम्। सत्यम्
···सत्यम्···सत्यम्।

सत्यवचनस्य अन्तराले उभयोरीप्सितम् अद्य निरभिधेयम्। तथापि सौहृदं सहोदरीयम्। सौमनस्यं च निसर्गमधुरम्।

समयः सन्दर्भगर्भः।

प्रव्रज्यातः प्रत्यागतः अलेखः। संप्रति ग्रीष्मकालः पर्यटनार्थं नानुकूलः। अतः कियत्कालमत्र स्थित्वा स आश्रमस्य कार्यक्रमविषये चर्चां करिष्यति। आश्रमस्य विविधप्रकल्पमवलम्ब्य विचारविनिमयं करिष्यति। जनपदतः कुलीनान्, अभिजातानान् बुधान् च आहूय सम्मेलनं कारयिष्यति। विद्यार्थिनामुपकाराय विदुषामपि गोष्ठी-मायोजयिष्यति। वार्षिकसमावर्त्तनस्य अनुष्ठानं कृत्वा उत्तीर्णान् संसाराय अनुमोदयिष्यति। वानप्रस्थानां स्वागतं करिष्यति। सन्न्यासिनां सम्मानं करिष्यति।

गृहस्थानां दानेन अयम् आश्रमः प्रतिष्ठितः। ते एव वानप्रस्थ-मङ्गीकृत्य अत्र निवसन्ति। सन्न्यासिनो भवन्ति। आश्रमस्य विभिन्न-कर्मणि आत्मानं नियोजयन्ति। ते अत्र विद्यार्थिन आसन्। चरमे वयसि अत्रैव ते शान्तेरनुसन्धानं कुर्वन्ति। शान्तिरेव चरमत्त्वम् मनुष्यसमाजकृते शारीरिकदैन्यं न तथा हनिकारकं यथा मानसिक-दैन्यम्। दैहिकदारिद्र्यस्य उन्मूलनं न सर्वथा सम्भवेत्। उपशमस्तु भवेदेव। परं सति च मानसिकदैन्ये समग्रमपि जगत् ध्वंसमुखमभ्यु-पैति। तदर्थमत्र ज्ञानस्य प्राधान्यम्। ज्ञानमिह तु सदसद्विवेकः। स एव विमर्शविषयः। तदर्थं न केवलं चरमं वयः अपेक्ष्यते, अपितु मूलतो मनः तयैव दिशा प्रेरणीयं भवति। तदेव सुखम्। तदेव शान्तेः निदानम्।

प्रज्ञा ऋतायते।

अलेखो निविष्टः। अनुचिन्तने तस्य अभिज्ञानमेव वीजायते। इदमिह निजाभिज्ञानम्। आन्तरैक्यमस्मिन् ऋतम्। ऋतापन्नो हि

सर्वो भावः। अयम् अशेषः। अयम् अनेकः। अयम् आदिकल्पः। अयमपि इतिकल्पः। यावत्त्वमत्र तत्त्वम्। इदं भूतानां मधु। इदं प्रत्येकम् इदम् अमृतम्। इदं च सर्वीभवने विज्ञानम्।

मनः संयुनक्ति शुभाङ्कः।

— गुरुदेव !

श्रद्धान्वितः अलेखः व्यलोकयत्।

शुभाङ्कः वचनसमवेतः।

— आकारितोऽहम्......?

— हम्......।

— कुत्रचित् प्रव्रजनीयम्......?

— नहि......।

— आदिशतु।

— नास्ति नियोगः।

— तर्हि अनुगृह्णातु।

— माता ते अस्वस्था। पिता न स्वस्थहृदयः। अवसरेऽस्मिन् कदाचित् गृहं गत्वा उभयं प्रसादय।

— प्रतिशृणोमि।

— उपार्कः कुत्र ?

उपार्क उपगतः।

— अयमस्मि।

— सम्मेलनविषयो ज्ञातः खलु ?

— तदर्थम्......

— उपनिषद्य उच्यताम्।

— तदर्थमस्माभिः चिन्त्यते।

— समयो नास्ति। त्वरया कर्त्तव्यम्।

— तदर्थं केचन उपगन्तव्याः।

— भवतु नाम। कुलभद्रः......उपकण्ठः......अन्ये च अभिजाता आमन्त्रणीयाः तैः साकमपि विमर्शो विधेयः।

— अहं तु उपकण्ठमुपसृतवान्। परमप्राप्य प्रत्यागतः।
— पुनः गम्यताम्। शुभाङ्कस्तु गृहं गमिष्यति। त्वम् एकाकी……
— चिन्ता माऽस्तु। मया सह शुभाङ्कः तत्र आगच्छतु। विमर्शानन्तरं स गृहं गमिष्यति। तेन सह अहं गत्वा तस्य पित्रा सह विमर्शं संपाद्य प्रत्यागमिष्यामि।
— तथास्तु।

अवनमनेन अनुग्रहं शिरसीकृतवान् उपार्कः। नेत्रसंकेतेन शुभाङ्कमिङ्गितवान्। तत उभौ शनैरपसृतौ।

निष्पत्तिशरणम् अपराह्णम्।

उपकण्ठः कर्मकुण्ठः। क्लान्तिबोधे जृम्भते सद्यो विमर्शः। एकाकी उपविश्य तत् सर्वं स स्मृतिपथमानयति। कुलभद्रस्य गृहं वारत्रयं गत्वा स प्रतिनिवृत्तः। न काऽपि निष्पत्तिः मनोऽनुकूला। कुलीनस्य परम्परामुररीकृत्य अवनी नाना विषयान् उपस्थापयति। कुलभद्रोऽपि निश्चित्य किमपि वक्तुं न प्रभवति। केवलं वदति, 'पुनः आगच्छतु'। एवं तु वारत्रयं संपन्नम्। तथापि विवाहदिननिश्चयो नाभूत्। पुनः कियद्वारं वा उपगन्तव्यम्? सर्वमेतत् श्रुत्वा अभिधा किं चिन्तयिष्यति? अन्यस्मै कस्मै वा निवेदनीयम्? पुत्राधिकारिणस्तु स्वैरिणः। कन्यार्थी च कामनावशः। को वा समुदाचारः कन्याजनकानाम्।

कालान्तररतितले अभिधामाता संप्रति केवलस्मृतिः। स्वप्ने सा अस्पृष्टप्रतीतिः। मनोबोधाय तस्याः तैलचित्रमपि रङ्गविहीनम्…… इङ्गितविहीनम्…। तथापि दृश्ये सैका आत्मीयरेखा। सौभाग्यशपथस्य अग्रपथे इदानीमपि सा प्रतिवचनं व्यवहितसाक्षिणी। निःसङ्गनिवेदने सैव अवलम्बनाय अग्रशिला।

उपकण्ठो भावमग्नः।

धात्री निवेदितवती।

—केचन दर्शनार्थमागताः।

उपकण्ठः किंचिदुत्सुकः।

— को वा स्यात् ? नूनं कुलभद्रः । अथवा तदीया जनाः । भवतु··· । प्रवेशय···।

अभिवादनं निवेदितवान् उपार्कः ।

— अहम् उपार्कः । महात्मनः अलेखस्य आश्रमत आगतः । अय मम बन्धुः शुभाङ्कः ।

शुभाङ्कः प्रणतवान् ।

— अहमपि आश्रमतः ।

— अस्तु । आसनमलंकुर्वन्तु ।

उभौ उपविष्टौ । धात्री सविनयं निवेदितवती ।

— आदिशतु ।

— हम्··· । अभिधां वद···, 'अतिथयः समागताः' ।

धात्री प्रस्थिता । उपकण्ठः प्रसन्नचेतसा अपृच्छत् ।

— कथं सन्ति गुरवः ?

— कुशलाः··· ।

शुभाङ्कः नम्रवाक् संजातः ।

उपकण्ठः किंचित् परिचिन्वान इव अपृच्छत् ।

— मन्ये, कुत्र दृष्टपूर्वो भवान् ।

— आश्रमे··· ।

— कुत्रत्यो भवान् ?

— सुन्दरग्रामवास्तव्यः ।

उपकण्ठ उत्सुकः ।

— कस्य पुत्रः ?

— अभिजातकुलभद्रस्य··· ।

सहसा चकित उपकण्ठः । किन्तु हास्यरीत्या आलापं परिवर्त्तयितुम् आरब्धः ।

— ओ··· ! स मे परिचितपूर्वः । अस्तु··· । महान् सन्तोषः ।



ततः स उपार्कमपश्यत् ।

— को वाऽस्ति नियोगः गुरुपादानाम् ?

— पूर्ववत् ऐषमोऽपि स्नेहसम्मेलनं भवेत्

— तदर्थमागता भवन्तः । सम्यक्··· । कः कार्यक्रमः ?

उपार्कः कार्यक्रमस्य विवरणं विशदयितुम् आरब्धः । शुभाङ्कः मध्ये मध्ये तदुपरि टिप्पणीमकरोत् ।

इतो धात्री अभिधानिकटे अतिथिसमागमं निवेद्य निजकर्मणि व्यापृता । अभिधामनसि तु भाविश्वशुरकुलभद्रस्य प्रसङ्गः । तदेव विभाव्य सा विनीतवेशेन आत्मानं सज्जीकर्तुमारब्धा । विकीर्णमनस्तत्त्वे इदानीं सा विह्वला । कल्पनायां तस्या नानार्थसत्ता । कामनया साक्षात् सा मधुप्रिया । उद्वेगसंकलने पुनः पुनः निजविम्बं दर्पणे विलोक्य पितुरादेशमात्रं सा प्रतीक्षते ।

धात्री शनैः सम्बोधितवती ।

— कनीयसि··· !

— उँ··· !!

— पितृचरणा आकारयन्ति ।

अभिधाहृदये स्पन्दनं प्रगुणितम् । सा तया सह शनैरागम्य सभाजनगृहं प्रविष्टा । अधोमुखी च दण्डायमाना अभूत् । कन्यायाः कातरभावमालक्ष्य उपकण्ठः तदीयमनोवृत्तं ज्ञातवान् । ततः तस्या उद्वेगमुपशमयन्निव अवदत् ।

— अरे······! इमे अस्माकं जनाः ।

अभिधा अपश्यत् ।

उपार्कमुखे स्मितस्य लघुतरङ्गः । चतुररीत्या गम्भीरः । अभिधा अत्मनि लज्जिता । किन्तु लज्जां संयम्य प्रसन्नभङ्ग्या अवदत् ।

— जाने······।

कन्यायाः संकोचं पुनरुपशमयन् उपकण्ठः व्यवृणोत् ।

— किं जानासि ? यज्जानासि तन्न सम्यक् । अयं शुभाङ्कः······ कुलभद्रस्य पुत्रः । अयम् उपार्कः······।

— तमहं जाने । कियद्दिनेभ्यः पूर्वं सोऽत्र आगतवान् । भवन्तं च

अन्वेषयति स्म ।

— तर्हि अयं स जनः ?

— अयमेव । अपरोऽयं तस्य सुहृत् ।

— कथं ज्ञातवती ?

— तदानीम् आश्रमे अनेन सहाऽपि साक्षात्कारः संजातः ।

— भवतु......, सत्कारार्थं किमपि......

— धात्रीमाता भोजनगृहे सर्वं सज्जीकृतवती ।

— अस्तु......। गुरुचरणानां निमन्त्रणमस्ति । सम्मेलने उपस्थातव्यम् अस्माभिः ।

— अवश्यम् । इदानीं सर्वमगवतम् । एते आयोजकाः खलु ?

उपार्कः उत्सुकभावेन अवदत् ।

— भवादृशीनां पितृचरणा अस्माकं मार्गदर्शका एव ।

उपकण्ठः प्रशंसावचनस्य तात्पर्यम् अवगम्य अवदत् ।

— भवतु । किमपि न चिन्तयन्तु भवन्तः । निमन्त्रणमङ्गीकृतमिति गुरुभ्यो निवेदनीयम् । आगच्छतु......

उपकण्ठ उत्थाय भोजनगृहं प्रविष्टः । तमनुसरत् शुभाङ्कः उपार्कस्तु मन्थर आसीत् । अभिधाहृदये इदानीं शुभाङ्कस्य सरलदृष्टिः तीक्ष्णायते । पुनश्च उपार्कस्य उन्मुक्तविवृतिः मनसि लहरीयति । एकत्र समर्पणार्थम् आवेदनम् । अन्यत्र आयत्तीकरणाय आकर्षणम् । एकत्र उत्सर्गस्य आवाहनम् । अन्यत्र ग्रासस्य सम्मोहनम् । उभयमध्ये अभिधा नारीत्वसन्धानं करोति । सा एका नारी—सरलपेशल भावग्रन्थिः । न केवलं सा समर्पयति अपितु ग्रसते । ग्राससमर्पणयोः संज्ञा तत्कृते एव प्राकृतिकी ।

बन्धुद्वयस्य सौप्रस्थानिकं व्याहृतम् ।

आकाशे नक्षत्रराजिः । रात्रिः यथैका भयंकरी मूर्च्छा । संभोगस्य नानाशैली अस्या इतिकथा । उपभोगप्रकारे स्वादविधा अस्या नैमित्तिकी प्रथा । उपकण्ठमनसि इदानीं तु युगरङ्गो जीर्णः ।



तस्य अनुभवे अहम् केवलान्वयी । अत्र कदाचित् लक्षणं न

व्याप्नोति चेत् क्वचित् अतिव्याप्नोति । विश्लेषणे 'अहम्' इति स्वाधीनतत्त्वम् । स्वतन्त्रता अस्य भूमिः । यदा अन्वेति तदा व्यापारः । तदा च कर्तृत्वम्……भोक्तृत्वम्……। यदा नान्वेति तदा ममकारः। ममकारो नाम संबन्धः । अत्राऽपि यतो नान्वेति तस्मात् 'अहम्' पृथक् तिष्ठति । परमिह पृथग्भावः तिरोभवति । ममकार इमम् अभिभवति । अभिभवो नाम न पराभवः । न वा पराधीनवृत्ति । केवलो नीचीभावः। अयं भावः क्षणिकः। तदनु निमज्जनपरिभवः। पुनरुन्मज्जनस्य अनुभवः । उन्मज्जने 'अहम्' स्वाधीनः । यदा स्वाधीनः तदा सुखम् । यदा च पराधीनः तदा दुःखम् । पराधीनोऽत्र ममकाराधीनः । ममकारश्च संसारः ।

मुक्तोदरा रजनी ।

निःसङ्गवलये उपकण्ठः शय्यालुण्ठितः । वातायने निम्ननभसो नक्षत्रप्रभा…उपवनस्य रुचिरुचिरसुरभिः…वातावरणस्य अनुष्ण आरोहः…। कालेऽस्मिन् जीवनधारा स्फुटतरा । जीवनं नाम इदानीं वितरणम् । भावाभावयोः विनिमय एव अस्मिन् उत्तरणसरणिः ।

को वा सन्देशः प्रेषणीयः ? इति विमृश्य कुलभद्र क्लान्तः । किं वा समाधानम् ? इति बहुवारं पृष्टाऽपि शन्नोदेवी सम्यक् वक्तुं न प्रभवति । तस्या एकैव कथा—'अवनी यद् वदति तदेव परिपालयतु' । कथमेतत् सम्भवेत् ? "शुभाङ्को मे भवतो गृहे तिष्ठतु" इति वा केन प्रकारेण उपकण्ठो बोधयितव्यः ? कथं वा स विषयेऽस्मिन् अनुरोधनीयो भवेत् ? अभिजातस्य मर्यादा किं धनाय एव ? उपकण्ठस्तु स्वयमेतन्न वदति । किन्तु कथं वा स साहसं कुर्यात् ? सोऽपि कुलीनः । तस्याऽपि सन्ततिरस्ति । तस्यां च स नितरामनुरक्तः । तस्या एव नाम्ना स सकलसम्पत्तिं समर्पयिष्यति । न तु शुभाङ्कनाम्ना । शुभाङ्कः तस्य पुत्रकल्पो भवेत् । न तु पुत्रः । 'शुभाङ्कः मम पुत्रः' इति तदर्थं मया किं करिष्यते ? अन्ततो विवाहनाम्ना दासवृत्तिनिमित्तं तमहं प्रेषयिष्यामि ? "पुत्रो दासो भवतु" इति किं पितुरभिलाषः स्यात् ? निजमर्यादां परित्यज्य पुत्रस्य किंकरीकरणं

किं पितृत्वस्य उत्कर्षं प्रतिपादयेत् ? धिगेतत् पितृत्वम् । नहि……, नैतत् सम्भवेत् । एवं मथ्यमानः कुलभद्रः उच्चैराकारितवान् ।

—को वर्त्तते ?

अवनी शनैरुदतरत् ।

—किमुच्यते ?

—अद्य सन्देशं प्रेषय ।

—कुत्र……?

—उपकण्ठस्य समीपम ।

—कः सन्देशः ?

—विवाहो नैव भविष्यति ।

—किमर्थम् ?

—नाधुना शुभकालः ।

—क एतद् वदति ? सर्वं सम्पन्नम् । दूत इदानीं यास्यति ।

—नहि । तं निवारय ।

—विषयेऽस्मिन् शुभाङ्कः अवश्यं प्रष्टव्यः ।

—कथं नोक्तं प्रागेतत् ? स तु सद्य एव आश्रमं प्रत्यागतः ।

—पुनस्तस्य आगमनं भवेत् ।

—इदानीं दूतः कुत्र यास्यति ? आश्रमम् अथवा उपकण्ठस्य गृहम्…?

—दूत उपकण्ठस्य गृहं गच्छतु । निवेदयतु च, 'यावत् कालं पुत्रस्य नानुमोदनं तावन्न विवाहः ।'

—कथमेतद् भवेत् ? किं सः चिन्तयेत् ? पुत्रः किमस्माकं गृहे प्रभुः ? तस्येच्छया किमत्र सर्वं प्रचलति ?

—विवाहविषये तस्यानुमोदनं नूनमपेक्ष्यते ।

—पित्रोरनुमोदनमेव पुत्रस्य……।

—नैवं भवेत् । निष्पत्तिः हितकारिणी भवतु ।

—को वा अहितं वाञ्छति ? रुच्यनुसारं तु वयं न कुर्मः । अधिकारे यदस्माकं वर्त्तते तदेव कुर्मः ।

—विवाहे तु रुचि· तेषाम् । अधिकारस्य प्रसङ्गः कियान् अत्र ?

उपेक्षया अवनी निजप्रकोष्ठं प्रविष्टा । कुलभद्रः हृतप्रभः । किंचित् च खिन्नः । निजविमर्शे स विप्रतिपन्नः । हताशमुहूर्ते हि जनः दर्शन स्पृशति । जीवनं च विमृशति । ततः सैव स्थितावस्था । स्वयं स तदवस्थः ।

शन्नोदेवी शन्नैरुपस्थिता ।

— किं स्थिरीकृतम् ?

कुलभद्रो नीरवः ।

शन्नोदेवी वोधयति

—यद् भवतु नाम, कर्त्तव्यं यथाशीघ्रं निश्चिनोतु । अन्यथा उभयतो हानिः । सम्यक् विचारयतु ।

—सर्वं विचारितं, देवि……। किन्तु विवाह इदादीं न सम्भवति ।

—तर्हि, अन्यदा चेत् तदपि निर्णयतु ।

कुलभद्रो विमनस्कः ।

शन्नोदेवी उदासीना । मनसि तस्याः पूर्व-संकल्पः—'जीवेमः शरदः शतम्' । अद्य तु रुग्णजीवने संकल्पो निष्फलः । शरत्कल्पना च वृथा । सौभाग्योदयस्य प्रतिश्रुतिरपि अस्तमेति । तथापि पुत्रस्य भाग्योदयकामनया इदानीं सा अवशेषायते । पुत्रार्थमेव तस्या अनेक-कामना आषाढनभसि यथा वलाकामालिका । किन्तु सम्मुखे अतथ्या-वली । पतिः विमुखः । सपत्नी बाग्विक्लवा । पुत्रो दूरस्थः । वचन-विनिमये मर्यादा पारम्परिका । कौलीन्यरीतिः न सांप्रतिकी । व्यवहारश्च पूर्वजानामेव क्रमरक्षी ।

अनन्त आकारितवान् ।

— मातः ! किं तत्र करोषि ?

शन्नोदेवी प्राकृतिस्था अभूत्।

— अनुपदं गच्छामि।

अनन्तसम्मुखे जननी शन्नोदेवी एका अपूर्वप्रतिमा। इदानीमपि दरपलितकपोलोपरि अवगुण्ठनस्य चित्रितधारः शोभामाहरति। अञ्चले स्नेहलाञ्छनम्। वचनं लालनपरिपाट्या पारिभाषिकम्। अनन्तः शनैरपृच्छत्।

— मातः! किमर्थं पिता विमनस्कः?

— अरे……, अनन्……! पिता इदानीं उत्तरवयस्कः। तथापि नाना कर्मसु व्यापृतः। विश्रामनिमित्तं समयः कुतः?

— अग्रजस्तु संप्रति समर्थः। कथं तदुपरि भारो न न्यस्यते?

— पिता तदेव चिन्तयति। किन्तु सोऽपि……

— अहमस्मि। प्रतिकार्यम् अग्रजस्य सहायो भविष्यामि।

— सम्यक्। तदेव पितृसमीपे निवेदनीयम्।

शन्नोदेवी अहसत्।

अनन्त उत्साहितः। त्वरया च गृहान्तरमुपगतः। देहलीनिकटे दण्डायमानः सन् अपश्यत् माता अवनी कर्मणि व्यापृता। तस्या भ्रूकुञ्चने चिन्ताया दिग्वलयः। दृष्टिरोतिः गम्भीरा। कपाले विचारस्य कुटिलरेखा। नासाग्रे निष्पत्तिः द्रढीयसी।

अनन्तः प्रकोष्ठं प्रविष्टः।

— मातः! किं चिन्तयसि?

— न काऽपि चिन्ता।

— व्यग्रा प्रतीयसे कथम्?

— कर्म समापनीयं खलु?

— किं कर्म……?

— गृहकर्म……वहिःकर्म……

— पिता सर्वं निभालयति। त्वं पुनः किं करोषि?

— पिता तु अद्यत्वे न स्वस्थः।

— कथम्……?

— इदानीं भारः अधिकः। तदर्थं चिन्ताऽपि अधिका। कर्म च अधिकम्। कियद् वा कर्तुं शक्यते ?
— अग्रजं कथं न नियोजयसि ?
— इदानीं तु स दूरस्थः।
— तर्हि, कथं न मां नियोजयसि ?
— तव सामर्थ्यं कुतः ?
— यावद् वर्त्तते तावत् करिष्यामि।
— नहि·····। तत् कथं भवेत् ? अग्रजोऽस्ति। स निभालयिष्यति विषयेऽस्मिन् तव चिन्ता माऽस्तु।
— कथं न ? इदानीं सर्वेऽपि गृहे चिन्ताकुला दृश्यन्ते। तदर्थं मम चिन्ता भवति।
— त्वं बालः। संप्रति कथं व्यापारेऽस्मिन् निमज्जसि ? याहि·····, निजविषये मतिं कुरु।

कोपेन अनन्तः प्रकोष्ठान्निर्गतः। इतस्ततो जल्पन् पूजाप्रकोष्ठं गन्तुमुद्यतः। पश्चाद् अवनी आकारितवती।

— अनन्······! अनन्······!

विरक्तभावेन अनन्त उक्तवान्।

— किमर्थं शब्दापयसि ?
— अरे······! शृणु······।
— किम्······?
— आचिरमेव अग्रजस्य विवाहो भविता। तदर्थमस्माकम् आयोजनं भवति। अतः सर्वे वयं व्यापृताः।

सानन्दम् अनन्तः अपृच्छत्।

— एवं चेत् कथं न पूर्वम् उक्तवती ?

अवनी लालयन्तीव अवदत्।

— याहि·····। अनन्तरं सर्वं ज्ञास्यसि।

अनन्तः प्रत्यावृत्तः।

किन्तु मनसि तस्य शङ्का। शङ्कायां च काचित् पारिवारिक-गोपनीयता जालं प्रसारयितुमुद्यता। सः सन्देही संजातः। अनुसन्धाने च मतिं न्यस्तवान्। पुनश्च अन्वभवत्—परिवारे समेषाम् आलाप-सन्दर्भः पृथक् चेतनां जनयति। तदनु यत्नतः सत्यमाकलयितुं चिन्तितवान्।

प्रतीक्षा पक्षघातिनी।

उपार्कः व्याकुलः। प्रतिमुहूर्त्तम् अभिधा तस्य कार्यप्रसरं प्रतिरुणद्धि। मनसि सैव स्वप्नं जनयति। शरीरे च पुलकं सृजति। उपवनस्य कुसुमेषु, पल्लवेषु, प्ररोहेष्वपि सैव शोभामातनुते। उपवने मलयस्य लहरी तस्या एव अञ्चलतरङ्गं स्मारयति। उद्यानस्य लघु-मार्गाः नमद्गुल्मेषु तदर्थमेव निह्नुतिकेलिं सृजन्ति। सा यथाऽत्र उदेति तथा च अस्तमेति। किमत्र तत्त्वम्? स्मृतिम,त्रं वा? परिकल्पो वा?

उपार्कः चिन्तामग्नः।

सहभाव इह सत्यम्। सहभावोऽयं मिलनस्वभावः। अन्तर्भावः अत्र आदिपर्व। पराभवः अत्र महाभावः। आत्मनि अयं मार्दवः। वहिश्च नीरवविभवः। विषयोऽत्र कुसुमप्रभवः। हृद्योऽस्मिन् अनुभवः।

कौतूहलं जनयति सत्यम्। अतः सर्वेषां तत्र दृष्टिः। इदम् अर्धपिहितम्। अतः सुन्दरम्। इदं मेयम्। अतो वाच्यम्। इदम् अनन्तम्। अतः आनन्दमयम्। इदं बाधरहितम्। अतः त्रैकालिकम्। इदमानुभविकम्। अतः अव्यक्तम्।

उपार्को विश्रृंखलः।

निजपथे नेदानीं स एकाकी। तत्राऽपि प्रतिस्पर्धी कामयते शुभाङ्कः। स आत्मीयः। किन्तु स्पर्धालुः। तथापि सहृद्भाव उभयोः बन्धनम्। परमन्तरा अन्तरायः अभिधाविमर्शः।

कामनायाः पृष्ठभूमौ उपार्कः संकीर्णः। सम्मुखे संसारः सारायते। अभिधा च उपहारायते। परायते शुभाङ्कः। चिरायते गृहस्थस्य पदाङ्कः। वरायते कालः प्रीतिरङ्कः। नेतिकारे तु उपार्कः सशङ्कः।

विशङ्कते शुभाङ्कः ।

कथं तोषणीया माता अवनीं ? केन प्रकारेण च पिता बोधनीयः ? शीर्णा जननी निरुपाया । अनुजोऽपि पर्याकुलः । परिवारे कलहवह्निः । सर्वे उद्विग्नाः । कुलमर्यादा विपन्ना । किं वा करणीयम् ? विपर्यस्तशुभाङ्कः व्याकुलभावेन उपार्कम् आकारितवान् ।

— उपार्क······! उपार्क······!

शुभाङ्कस्य व्यग्रतामालक्ष्य उपार्कः अब्रवीत् ।

— किम्······? किमभूत्······? किं चिन्तयसि ?

— कार्यमेकं करिष्यसि ?

-- किं कार्यम् ?

— गृहं मे गन्तुं शक्नोषि ?

— किमर्थम्······?

— किंचन्निवेदनीयमस्ति ।

— कथय······। नूनं गमिष्यामि ।

— जनकं मे वद······

— किम्······?

— यथा कनिष्ठा माता वदति तथा मे मतिः ।

— अरे······! स्पष्टं वद ।

— यत् कनिष्ठा माता इच्छति तदेव भवतु ।

— अरे ! किं सा इच्छति ? किं वा त्वमिच्छसि ? कथमहं जानीयाम्······?

— स्पष्टतायाः का आवश्यकता । एतावन् मात्रं वद······।

— एवं कथं भवेत् ? आवयोर्मध्ये अविश्वासः कथम् ?

— नहि······। एतावद् वद······ ।

— नैवं भवेत् । एतावति इयान् श्रमः ? स्पष्टं कथय । अन्यथा······

— अन्यथा किं भवेत् ?

— हानिः······, ग्लानिः······

— तर्हि, एवं वद, 'विवाहानन्तरं शुभाङ्क उपकण्ठस्य गृहे एव स्थास्यति । एतत् तस्य अभिमतम्' ।

— किम्……? किमुक्तम्……? विवाहः…? अभिधया सह…?

— किमभूत् ?

— विवाहो निश्चितः ?

सहसा उपार्कः ग्लानिग्रस्तः। नेत्रं तस्य हर्षशून्यम्। लपनं च विषण्णम्। अवसन्नं च वचनम्। ततः स वातुलभावेन अवदत्।

— नूनम्……नूनं त्वदुक्तं निवेदयिष्यामि। नूनम्……नूनम्……

इत्थं जल्पन् उपार्कः त्वरया प्रस्थितः। तस्य मनोभावं ज्ञात्वा शुभाङ्कः चकितः। तथापि व्यस्ततया आकारितवान्।

— उपार्क……! उपार्क……! न गन्तव्यम्……।

किन्तु उपार्कः किमपि न श्रुत्वा अन्तर्हितः। शुभाङ्को नितरां व्यथितः। विषयस्तु अप्रथितः। दिवसो दिवंगतः। आशाविशेषः अस्तमितः। बन्धुः दूरस्थः। शुभाङ्कः दुःस्थः। निजविमर्शे स अस्वस्थः।

वासरो दीर्घतरः।

मनोमालिन्यस्य उपक्रमे बन्धुत्वं क्रमशो दूरतरम्। उपार्कः पुरो गच्छति। लक्ष्ये तस्य नेदानीं शुभाङ्कय सन्देशः निर्देशो वा, अपितु अभिधा। सैव साक्षात्करणीया। सैव वरणीया……निजीकरणीया।

अपराह्णसूर्यस्य तिर्यग्रश्मिः दुर्बलः। छाया मनस्विनी। विहगो विशदचित्तः। रावः पुनर्नवः। मार्गो विजनस्वभावः। स तत्र एकाकी। ग्लानिः तस्मिन् नैमित्तिकी। आशा च वराकी।

उपकण्ठस्य निवासपरिसरं सरसीकरोति अर्ध-छाया। विजनं प्रतिभाति गृहोद्यानम्। देहलीं स्पृशति उत्तापः। पवनस्य हतवेगं सूचयति द्वारसज्जा। निहितकपाटे चित्रकला कुलीना। कापट्यं प्रकटयति प्रासादस्य मुखशाला।

उपार्कः टङ्कितवान्।

परिचारिका द्वारमुन्मुक्तवती।

— उपविशतु।

— महाभागाः सन्ति ?

— नहि, तेषां कन्या अस्ति। उपविशतु……, तामहम् आकारयामि।

सोद्वेगम् उपार्क उपविष्टः।

शनैरुपगता अभिधा।

— अरे……! भवान् ?

— सोऽहम्……।

— का वार्त्ता ?

— पितृपादाः न सन्ति ?

— को विशेषः तेषां निकटे ?

— अस्ति कश्चित्……

— मां कथयतु……। ……निवेदयिष्यामि।

— माऽस्तु। अन्यदा आगमिष्यामि।

— किं मयि अविश्वासः।

— नहि……नहि……तन्न……।

— तर्हि कथं न कथयति ?

उपार्कः केवलं तामपश्यत्। नयने तृष्णा द्राघीयसी। अभिधा मुखम् अवानमयत्। उपार्कः संयतः।

— न किमपि चिन्तयतु भवती। यथाकालं पुनरागमिष्यामि।

उपार्क उत्थितः गन्तुं च उद्यतः।

अभिधा भावपूर्णा आसीत्।

— भवतु……।

उपार्कः किंचिद् विहस्य प्रस्थितः। अभिधा गम्भीरा आसीत्।

पूजागुञ्जने अञ्जनशीलः सांयकालः।

प्रत्यागत उपकण्ठः। अतीव क्लान्तः। पुनश्च भाराक्रान्तः। आत्मना सः अशान्तः। मनसि संलग्नः स एव विवाहवृत्तान्तः। गमनागमनं बहुगुणितम्। तथापि निष्पत्तिः नाभूत्। इदानीं उपकण्ठो विरक्तः। न पुनस्तत्र कश्चित् संपर्क उचितः।

किन्तु पिता सः……कथं वा निष्करुणो भवेत् ? कन्या अभिधा आत्मनः सत्क्रिया। पुनश्च मातृविहीना। यदि तस्या जननी अजीविष्यत् नूनं सा तदीयमनोव्यथाम् अज्ञास्यात्। विवाहविषये

कन्याजनकयोः दूरता तु अनिर्वचनीया। एवं विचिन्त्य उपकण्ठः कारुणिकः। मनसि तस्य नादमुदहरन् मृता पत्नी।

— कन्याया अभिलाषो यथाशक्ति पूरणीयः। अन्यथा ममात्मा शान्तिं न प्राप्नुयात्। अयं मे अन्तिमाभिलाषः······भवदीयचरण-तले प्रार्थनारूपेण उपस्थापितः। वचनं ददातु······।

— देवि! कदा ते वचनमन्यथाकृतं वा?

— नहि······।

— तर्हि, इदानीं कथमविश्वासः?

— नाऽयम् अविश्वासः······अपितु संकल्पः······अनुरोधः······प्रार्थना······।

— पश्य, देवि! अयमस्तंगमसूर्यः मे साक्षी। नूनं ते वचनंपरि-पूरयिष्यामि।

प्रकृतिस्थोऽभूत् उपकण्ठः।

— अरे······! को वर्त्तते?

परिचारिका उपस्थिता।

— आज्ञापयतु।

— अभिधा किं करोति? तामाकारय······।

अभिधा समागता।

— पितः! किमपि······

— हम्······। आलोचनीयमस्ति।

— किम्······।

— कदाचित् वयं आश्रमं प्रति भ्रमणाय गमिष्यामः। दिनं निश्चिनुहि।

— नूनं गमिष्यामः। भृशं रोचते तत् स्थानं मे।

— मन्ये, केचन विद्यार्थिनः आगता आसन्।

— अद्यापि आगतवान्।

— कः सः?

— उपार्कः······। स नितरामुत्साही।

— अन्यः कश्चित् ?

— हम्……। शुभाङ्कः……। स तु नागतः।

— मन्ये, शुभाङ्कः……

— नहि, उपार्क उत्तमः।

— भवतु……। नूनं सप्ताहेऽस्मिन् गमिष्यामः।

— नूनमेव। गच्छतु……। करचरणं प्रक्षालयतु।

— तत्तु संपादनीयम्……।

— अहं भोजनाय सर्वमायोजयामि……

अभिधा परिचारिकामाकारयन्ती निजप्रकोष्ठं प्रविष्टा। नयने अभासत्, मातुरन्तःपुरस्य सांकेतिकी चित्रशैली…पद्मोपर्यि प्रणवस्य अखण्डप्रणयः… पारावतयुगलस्य चञ्चूशृङ्गारः…… पुनश्च अस्ताचलस्य शाश्वतमदिरा…गलत्केशरा कुमुदिनी…तदुपरि ग्लानचन्द्रस्य मन्दरश्मिः। परमन्तःपुरमिदं वहुदिनेभ्यः पिहितम्। अभिधा नेत्रं न्यमीलत्।

श्वासो दीर्घायते।

उपार्कः संशयात्मा। मनसि तस्य अविश्वासः। पूर्वभावे शुभाङ्कः इदानीं न आत्मीयः। उभयस्य व्यवधानं क्रमशो दीर्घायते। आलापे उभयस्य मनोभावः सामञ्जस्यं न वहति। नेत्रमिलनमपि प्रतिबध्नाति काऽपि अलक्ष्या अनुरक्तिः। आकुलदृक्पथे उभयस्य आश्रुतिः अतीतविषया। प्रतिश्रुतिः पिहितकाया। निजमाया उभयस्य जाया। व्यवधाने सैव दुरत्यया।

अलेखो निजैकलक्ष्यः।

अवधाने तस्य—जीवनस्य संकीर्णं आत्मविन्यासः…गाढगूढो जडात्मा ……तस्य च विविक्त उच्छ्वासः…उपरि प्लवमानो जलदः… परितः परकीयभेदः……तले मृन्मार्गो विशदः……अन्तःकरणे महाशून्यस्य निनादः……। पुनश्च कादम्बिनीरतिधारे नक्षत्रस्य अलंकृतिः तस्य मानसं द्रवयति। हृदयं भावयति सार्वजनीनममत्वनीतिः। स्वस्तिचेतनां विकलयति अवधिमती काचित् नियमसम्पत्तिः।

नियमो ध्रुवः। आविर्भाव आकस्मिकः। तिरोभावः स्वाभाविकः। संसारः शारीरिकः। विषयः सावधिकः। भोगः क्षणिकः। प्रवृत्ति-प्रवाह आपेक्षिकः। विनिमयो भौगोलिकः। दायो नूनंभाविकः। निक्षेपो गतानुगतिकः। नियमोऽत्र मौलिकः। अयमिह नूनंभावे पारिभाषिकः···विशोधने एककः···ऋताख्यः कश्चित् ओंकारप्रकारकः।

शुभाङ्कः अधोमुखः।

प्रार्थनां पुरस्कृत्य स गुरुसम्मुखे आसीनः। मनसा निमग्नः। अद्य गृहं प्रत्यागमिष्यति। पितुरभिलाषं पूरयिष्यति। मातुर्वचनं पाथेयीकृत्य जीवनं नेष्यति। विवाहसंस्कारेण स द्वैतो भविष्यति। ततः सम्पत्ति-सुरक्षार्थं च अभिषिक्तो भविष्यति। ततः अभिषिक्त एव अधिकारी···

इदानीमपि शुभाङ्कः मातुर्लोतकस्य उष्णतामनुभवति। अनुग्रह-वात्सल्ययोः प्रतिस्तरं मातृत्वं तस्य विश्लेषणविषयः। तत्र आवृत्ता भवति निजसत्ता। स्त्रीप्रत्यये आत्मप्रत्ययो निमज्जितो भवति। शुभाङ्कः आत्मानं विस्मरति।

सम्मुखे दण्डायमाना भवति जननी···तद्दिने सा सौप्रस्थानिकं निवेद्य कुशलम् अकामयत्। अहो, विसर्जनवेलेयं कियती न विषाद-वन्धुरा? तदानीं सोपानमवरुह्य सा अवदत्।

— पुत्र! तद् अर्जय येन सुखी भविष्यसि। स्थावरसंपत्तिः न वर्धते···न वा वर्धिष्यते। वर्धते तु मोहस्य परिसरः। अधिकार-नाम्ना अहंकार एव प्रसारितो भवति।

शुभाङ्कः सिक्तहृदयः।

शन्नोदेवी निर्देशकठोरा।

— याहि···। अग्रे सर···। न कदाचित् पश्चात् पश्य। पश्चाद्भागः तमोभाग एव।

शुभाङ्कः पश्चादपश्यत्।

शन्नोदेवी वारितवती।

— नहि···, मार्गः अग्रे। पुरः सर···। इयमन्धा जननी त्वत्पदाङ्कम्

अनुसरिष्यति । त्वमेव हि मे प्रकाशः ।

शुभाङ्कनयने अश्रु ।

शन्नोदेवी सान्त्वयति ।

— विलम्बो वृथा । गुरुमनुसर··· । स एव प्रदीपः । याहि··· । अग्रिमो भव । सत्यम् उद्धर । मा प्रमदः ।

प्रणामं निवेद्य शुभाङ्कः तदानीं लोतकम् अपमृष्टवान् । अद्य अग्रे तथाभूतः पन्थाः । निकटे स एव गुरुः । स्मृतितले कल्याणनिष्ठुरा जननी ।

शुभाङ्को वहिरागतः ।

अपरदिग्भागे प्रतिबिम्बनमपेक्षते पूर्णा तटिनी । शुभाङ्कः शनैः तत्र उपगतः । शून्यमन्दिरस्य प्रतिबिम्बेन सह निजप्रतिफलनं स अमेलयत् । को निजत्वं पर्यत्यजत् ? इयं तटिनो···इदं जलम्···अयं शुभाङ्कः । कुत्राऽसौ मिश्रबिन्दुः···? को वा कं निजीकृतवान् ? कोऽयं त्रिकः ? दर्शो वा ? पूर्णमासो वा ? कोऽयं यागः ?

करतालो ध्वनितः ।

शुभाङ्कः चकितः । पश्चात् अहसत् उपार्कः ।

— किमत्र क्रियते···?

शुभाङ्को मनाक् अव्यवस्थितः ।

उपार्कः दाम्भिकभावेन अवदत् ।

— किं पराजयो न स्वीकृतः ?

— अभिप्रायस्ते आकलयितुं न शक्यते ।

— किम्···आशा न पूर्णा ?

— केयम् आशा···

शुभाङ्को विस्मितः । कथमद्य उपार्कः दाम्भिकभावेन वदति ? विजयी इव उपहसति ? को वा पदार्थः लब्धः ? विचिन्त्य सः अपृच्छत् ।

— किमपि त्वया लब्धमद्य ?

— सत्यम् ।

— सत्यम् ?

— तदेव···यद् वाञ्छितम् ।

— किं तत्···?

— तदेव सत् । तद् हि प्रीणाति । तदेव भाति ।

— किं साक्षात् ?

— साक्षात् अभिधा ।

उपार्कः भावाविष्टः—इयमादिस्पन्दनस्य स्थूलाकृतिः । इयमेव वचनस्य मधुरप्रकरणे विक्लितिः । इयं च वितरणपरिभाषायां जीवनविभूतिः । इयं पुनः सहभावे विनिमयस्य प्रियप्रकृतिः···।

वेद्यान्तरजडः शुभाङ्कः ।

उपार्कः निमन्त्रणपत्रं प्रसारितवान् ।

— मम विवाहः अभिधया सह ।

शुभाङ्कः पुनश्च स्तब्ध ।

— किमस्मिन् गुरुः···?

— ते तु सम्मताः । तेषामाशीर्वादोऽपि मया गृहीतः ।

सोच्छ्वासं शुभाङ्कः स्वीकृतवान् ।

— भवतु···। शुभमस्तु ।

— नान्यथा चिन्तनीयम् । आगन्तव्यम्···

उपार्कः उपाहसत् ।

शुभाङ्कः क्षीणमहसत् ।

— अस्तु···। स्वीकृतम्···।

उपार्कः प्रस्थितः ।

अर्धनिमीलितदृष्ट्या तस्य मार्गमवलोकयन् शुभाङ्कः चिन्तित आसीत् ।

स्वस्मिन् स्वाधीनधर्मः प्रबुद्धः । अयमेव अवशेषः । अयं च विशेषः । स्वयं साक्षी । मुखबन्धे कर्मण उपक्रमः । मध्ये विषयो व्यापारः । तदुपरि संयोगस्य वियोगस्य च उपलेपः । परिशिष्टे फलं तु निर्लिप्तम् । तदेव तत्त्वम् । तत्त्वं च स्वाधीनम् । नामान्तरे तदेव 'अहम्' । अहमेव सत्यम् । सत्यं च प्रधानम् । तच्च अविशिष्टम् ।

पिप्पलच्छायातले शुभाङ्को निमग्नः। पुरतः तथापि सत्यापन्नम् अभिधाया मुखमण्डलम्। हृदयं तु मथ्नाति गुरुवचनम्···।

"शुभाङ्क! कालोऽत्र भावस्य नियामकः। समानोऽपि मार्गः न सदा समभावं पथिकोकरोति। कालः सर्वमपि परिच्छिन्नत्ति। एतदर्थं च मार्गः कदाचित् शुष्कश्चेत् कदाचित् कर्दमाक्तो भवति। अतोऽस्मिन् मोहो वृथा।"

शुभाङ्क एतदेव रोमन्थयति...विचारयति··· विश्लेषयति······।
तथापि रहस्याख्यायी। पुनश्च मनोऽणुं निक्वणयति। विमर्शो न अज्ञातः कश्चित् प्रणयवेणुः।

अनन्तः प्रतीक्षते।

अपरिमिता संपत्। अप्रतिमम् ऐश्वर्यम्। किन्तु मनो न सन्तुष्यति। केयं कथा? तथापि संपर्के दूरता? तथापि हताशा? केऽयं भावभूमिः? अथवा अग्रजस्य विवाहविषयिणो इयं मौनता? यदि एकत्र विवाहो विपन्नः तर्हि अन्यत्र स्थिरीकर्त्तव्यः। कथं चिन्ता? कुलमर्यादा किम् अन्यरीत्या अन्यत्र नाभिवर्धेत? नैतत् सर्वं सन्तोषजनकम्। अन्तराले नूनं किंचित् सत्यं निगूढम्। निष्पत्तिः तदपेक्षिणी एव।

माता अवनी पर्यङ्के आलुण्ठिता। नेत्रं मुद्रितम्। किन्तु भाले चिन्तनरेखा गभीरा दृश्यते। मुखं परिशुष्कमिव। कपोले केशकतिपयं स्वेदजडितम्। अधरं विशोर्णम्। वसनं च अयत्नतिहितम्।

अनन्तः शनैराकारितवान्।

— मातः! अस्वस्था किम्······?

अवनी चतुररीत्या अवदत्।

— नहि······तु! कुत्र गतवान्? भोजनं कृतं वा?

— कथं वा रोचेत?

अवनी व्यस्तभावेन आकारितवती

— अरे···! को वर्त्तते पाकशालायाम्···?

अनन्तः वारितवान्

— माऽस्तु । न आवश्यकम् । भुक्तं मया ।

— किं तर्हि······देहो न समीचीनः ?

— सम्यक् अस्मि ।

— तर्हि, कथं खिन्नं मनः ?

— काचित् जिज्ञासा वर्त्तते ।

— कः प्रसङ्गः ? को वा प्रश्नः ?

— गृहे सर्वे उदासीनाः । किमभूत् ? सर्वेषां विषण्णं मनः । न कोऽपि सम्यग् वदति ।

— अहं तु यथापूर्वं वच्मि ।

— नहि······ । भवतो छलयति ।

— अरे······, कथं छलना ? किं त्वं परः ?

— पर एव । अन्यथा कथं न सत्यं कथयसि ?

— कस्मिन् विषये ?

— कथं पिता चिरात् मौनः ? किमर्थं ज्येष्ठमाता नितरामवसन्ना ? किमर्थमेते सर्वेऽपि कर्मचारिणः मामेव पश्यन्तः स्थिरा भवन्ति ? नूनमत्र काचित् अपह्नुतिः ।

— नहि, न तथा किमपि अस्ति । पिता अस्वस्थः । ज्येष्ठमाता च सदैव तथा । त्यज, निजनियोगं संपादय । नान्यथा चिन्तय ।

— नाऽहं किमपि श्रोतुमिच्छामि । अद्यैव समाधानं कुरु ।

— किं समाधानम् ?

— न ज्ञायते······??

अवनी चकिता

अनन्तः विरक्तभावेन अवदत् ।

— यथा पितुरभिलाषः तथा कुरु ।

— किम्···?

— अग्रजस्य नाम्ना समग्रसंपत्तीनां यथा समर्पणं भवेत् तथा कारय ।

— कस्तत् प्रतिषेधयति ?

— त्वम्······ ।

— अनन्त……!!

— त्वमेव परिवारेऽस्मिन् अशान्तेः कारणम् ।

— किमेतद् वदसि ?

— यथार्थं वच्मि । मन्निमित्तम् अपचेष्टा कथम् ? नेयं सम्पत्तिरावश्यकी मम । नाऽहं किंचित् अभिलषामि । सत्वरं मनोवृत्तिमिमां परित्यज ।

— अहं जाने । तवैव मनोवृत्तिविषये कस्त्वाम् अवदत् ? कः सः वराकः ? किं स जानाति माम् ?

— मम मनोवृत्ति विमृश्य पिता रुग्णः । ज्येष्ठमाता विशीर्णा । अग्रजः प्रवासी ।

— अनन्त ! किमेतद् विजल्पसि ? जानासि माम् ?

— सम्यक् जाने । त्वं निष्ठुरा……दाम्भिका……

— अनन्त……!! अहं गृहपत्नी । गृहस्य हितं चिन्तयामि । यदत्र गृहस्य अहिताय कल्पते तत् सर्वमपि अन्यथा कर्त्तुं न कदापि पश्चात्पदा भविष्यामि ।

— किम् अशान्तिः गृहस्य हिताय ?

— कस्यापि ते प्रश्नस्य उत्तरं दातुं नाऽहं बाध्या । याहि…… निजनियोगं संपादय……।

अवनी विरक्ततया अपरदिशं विवर्त्तिता ।

अनन्तः दृढमवदत् ।

— परं जानातु माता……अनन्तः न कदाचित् अन्यायस्य समर्थनं करिष्यति । न वा अन्यस्य अधिकारं बलान्नेष्यति । यत् सत्यं यच्च न्यायोचितं तदर्थम् अनन्तः प्राणविसर्जनमपि करिष्यति ।

कुपितः अनन्तः बहिरागतः । तस्य भावम् आलक्ष्य परिचारिकादयो विस्मिताः । अवनी निजद्वारं पिहितवती । अपरप्रकोष्ठे उच्चस्वरं निशम्य कलहं च अनुमानेन निश्चित्य कुलभद्र आकारयन् उत्थितः ।

— अवनि……! अवनि ·…! अरे …, कुत्र गता ? अनन्त…!

अनन्त……! अरे, किमभूत् ? अयि…… !को वर्त्तते ?

परिचारको विनीतोऽभूत् ।

— आज्ञापयतु……।

— शन्नोदेवीप्रकोष्ठपर्यन्तं किंचित् आलम्बस्व माम् ।

— आगच्छतु……। स्कन्धेऽस्मिन् करं स्थापयतु ।

परिचारकः यत्नेन कुलभद्रं धृत्वा मार्गं निरचिनोत् । पश्चात् द्वारमुन्मुक्तमासीत् ।

कुलभद्रः शनैः प्रकोष्ठं प्रविष्टः । शन्नोदेवी किंचित् विचलिता । कुलभद्रः पर्यङ्के उपविश्य विषण्णतया अवदत् ।

— देवि ! अनन्तः अद्य कुपितः ।

शन्नोदेवी तदीयमनोभावमवगम्य अपृच्छत् ।

— किमर्थम् ?

— न जानासि ?

— नहि ।

— तर्हि, स कुत्र गतः ?

— तदापि न जानामि ।

— भवतु……।

— भवान् संप्रति अधिकविषण्णः प्रतीयते । किमभवत् ?

कुलभद्रो भावगद्गदः ।

— अहमनुतप्तो देवि……! मया त्रुटितम् । त्वन्निकटे अपराद्धम् ।

— किमेतद् वदति भवान् ?

— हम्……, देवि ! तद्दिने मिथ्या कथितम् । कुलरक्षानिमित्तं त्वन्निकटे वरः प्रार्थितः । किन्तु कुलरक्षाविषयः तदा गुरुतरो नासीत् । प्रवृत्तिचरितार्थता एव मनसि मे मुख्या आसीत् । एतदर्थम् अद्यापि अहं दग्धः……अहम् अनुतप्तो देवि !

— तत् सर्वं विस्मरतु ।

— कथं वा विस्मर्तुं शक्यते ? पाशविकप्रवृत्तेः परिणाम इदानीं मां

दहति । इदमेव पशुत्वं दृष्टिं मे विफलीकृतवत् । संप्रति अहम्···
अहम् अन्धो, देवि !

— विचलितो मा भवतु भवान् ।

— सत्यनाम्ना शपथच्छलेन सर्वोऽपि अधिकारः बलान्मया गृहीतः । तदर्थमद्य परिवारे अशान्तिः । अवनी उद्धता । अनन्तः विश्रृंखलः । शुभाङ्को मे प्रवासी ।

— शान्तो भवतु । कालक्रमेण सर्वस्य समाधानं भविष्यति ।

— नहि, देवि ! नाऽहं समाधानमिच्छामि । केवलं प्रायश्चित्त-मिच्छति मे मनः ।

— भवान् अस्वस्थ । अधिकचिन्ता न श्रेयसे······। विश्राम्यतु भवान् ।

— देवि ! त्वमत्र सत्यं सरलभावेन गृहीतवती । एतदर्थं मत्सम्मुखे त्वं सत्यस्य मूर्तिमती प्रतिमा । त्वत्समीपे मम प्रायश्चित्तं······

— दुर्बलो मा भवतु भवान् ।

— प्रायश्चित्तरूपेण मयि क्षमां सूचय, देवि ! क्षमस्व माम् ।

— कथं वा इदानीं क्षमाया अधिकारिणी भवेयम् ? अहं हि समर्पिता भवदीयचरणतले ।

— अहं शरणापन्नो देवि !

— अनेन न मां व्यथयतु भवान् । भवतो व्यथानिमित्तम् अहमेव प्रथमप्रकृतिः । तदर्थम् अद्य अनुतप्ता । पुनश्च भवान्······

— नहि, नहि,·····देवि ! नैतत् कदापि सम्भवेत् । मदीयदुःखस्य अहमेव कारणम् । मां मोचय, देवि ! मार्गं दर्शय ।

— आश्वस्तो भवतु । सेवानिमित्तं मे अवसरं ददातु ।

— अहं शरण्यो, देवि ! त्वदीयं दानं प्रतीक्षमाणः अस्मिन्नेव प्रकोष्ठे कालं निभालयिष्यामि ।

— तथास्तु ! परमस्मिन् उत्तीर्णवयसि किं वा प्रदाय सन्तोष-यिष्यामि ? केवलं, विश्रामनिमित्तं कियन्ति प्रार्थनावचनानि विहाय नाधिकं किमपि मयि वर्त्तते । तदेव पुरातननिवेदनं

पुरस्कृत्य इदानीमपि वदामि, 'किंचित् विश्राम्यतु भवान्'।

कुलभद्र आश्वस्तिकातरः। शन्नोदेवी गलितहृदया। पर्यङ्के शय्या आवाहनप्रिया। किन्तु परिवेशो निरुत्कण्ठः। दूकूलधारे आभिजात्यच्छटा कटाक्षकठिना। मन्दावेगे मधुबन्धः असुन्दरः। समयः स्वप्नबन्धुरः।

भोगांशः सिद्धपूर्वः।

संप्रति उपार्क उपकण्ठस्य जामाता। स प्राचुर्यस्य अधिकारी। संपत्तेश्च प्रभुः। स एव उपकण्ठस्य भाविजीवननिमित्तं प्रतिश्रुतिः। अभिधायाश्च तीर्थभूः। तस्य मनोविनोदाय परितो विलाससामग्री-सम्मुखे पूर्णप्राणा भोगविभव अभिधा। ऐश्वर्यसामग्रीं वहुवर्णयन्तः परिचारका निजपार्श्वे सुखभूषणाः। विषादः कुत्र? उत्तुङ्गप्रासादः नभश्चुम्बी। परमिह शून्यता कुत्र? प्रति प्रकोष्ठं प्रदोपमाला प्रकाशप्रणयिनी। अन्धकारः कुत्र? दृष्टिपथे प्रतिमार्गम् आदिभावस्य लास्यशैली। अभावः कुत्र? पुष्पेषु पल्लवेषु च सर्वत्र पावनस्य साक्षात् चित्रम्। किमिह अपवित्रम्? संपर्कप्रसारे प्रतिमुहूर्तमिह शुभस्य संगीतम्। विडम्वना कुत्र? सर्वत्र सदेव दृश्यभूषणम्। किमसत्······?

उपकण्ठः सन्तुष्टः। आश्रुतिः निभालिता। प्रतिज्ञापितं पूरितम्। दायित्वं समर्पितम्। संकल्पो हस्तान्तरीकृतः। संशयः समाप्तः। व्यग्रता विलुप्ता। कार्यवेग उपसंहृतः। परमुपसंहृतिरिह विरति-मात्रम्। इतो नूतनचिन्ता। नव्यं च कर्म।

उपान्तं वय विश्रामो ध्येयः। सम्मुखे अवक्षयः। पश्चात् विलयः। परितः शिथिलः दृश्यप्रचयः। तथापि संसारस्य श्रीधारः पूर्ववत् ज्ञाने विषयः। स एव भावनायाम् अतिशयः।

उपकण्ठ आसीनः।

अभिधा उदासीनतया आगम्य पार्श्वे उपाविशत्।

उपकण्ठः सामान्यं विहस्य अपृच्छत्।

— कथम् उदासीना प्रतीयसे ? किं जातम् ?
दीर्घश्वासेन नासिकामुत्फुल्लयन्ती अभिधा निरुत्तरा। उपकण्ठः आश्वासनमुखेन अपृच्छत्।

— किम् उपार्को न प्रत्यागतः ? भवेत्……, कर्मव्यापृतः स्यात्। सम्पत्तिरिदानीम् इतस्ततो निपतति। दायित्वं तदुपरि न्यस्तम्। स वा सहसा केन प्रकारेण सर्वं निभालयेत् ? एतदर्थं समय आवश्यकः। अन्यथा स यदि सर्वदा अत्रैव उपविशेत् तर्हि गृहरक्षा कथं भवेत् ? कथं तव मर्यादा वर्धेत ?

अभिधा इतस्ततः अपश्यत्—मधुचन्द्रिका किं समाप्ता ? किमेतावति मधुसमयो विगलितः ? रूपमोहो नेदानीं गरीयान्। निजीकरणस्य लोभस्तु ग्रासोन्मुखः। प्रणयस्य अन्तराले दायित्वबोधच्छलना प्रभुभावमेव सर्वीकरोति। पुष्पम् आघ्रातम्। रस आस्वादितः। नूतनतया आकर्षणीयं तु संपत्तेः परिमाणमधुना।

उपकण्ठः कन्याया मनोभावमालक्ष्य गम्भीरभावेन अवदत्।

— मा अन्यथा चिन्त्यताम्। यद् भवेत् यत् सर्वं तव मङ्गलाय एव। त्वमस्य गृहिणी……गृहपत्नी। तवेच्छा अत्र फलवती भवेत्।

अभिधा उदासीना। विमनस्कमुखे तस्याः संशयरेखाः। अस्वस्थदृष्टिप्रसरे म्लानघटनाः। उदासस्मरणे सद्योविनोदः दूरक्रमः। अपूर्णसन्धाने प्रतीक्षा वलशालिनी। आशायां विश्वासः प्रतीतिविकलः। असन्तोषः क्रमवर्धिष्णुः। विक्लवबोधो भावान्तरभीरुः। विषया विन्यस्तः।

शुभाङ्को नितरामुद्बुद्धः। नाद्य मनसि उत्कण्ठा, न वा उद्वेगः। परितः तपोवनस्य श्रीधारा। गमनार्थं मार्गाः सर्वत्र अनुकूलाः। तथा च निजभावः समानप्रभवः। यत्र दृक्पातः तत्र शान्तिपथः। जनाः समस्ता निजबान्धवाः। मिलनमेव परिचयसारः। अतिथिभावश्च सन्न्यस्तसंपत्तिः।

अभिधा दृष्टिं निक्षिप्तवती। आगन्तुकः कश्चित् अग्रेसरः।

परिचित इव अप्रार्थितः संप्रति इत आगच्छति। अभिधा त्वरिता। द्वारमुन्मोच्य उपगता। सम्मुखे अनिमन्त्रितः पुरोहितो निर्वाक्। अभिधा अवगुण्ठनं संप्रसारितवती अनुच्चस्वरेण सा अपृच्छत्।

— कमन्वेष्यति भवान्?

शुभाङ्कनयने कुण्ठिता वधूः अभिरूपा। स नतमुखः सन् अपृच्छत्

— उपार्को वर्त्तते?

अभिधानेत्रमण्डले जटावर्धितकलेवरः श्मश्रुलः। ज्योतिष्मान् तथापि उदात्तपुरुषः। सं किञ्चित् अधो विलोक्य अपृच्छत्।

— किं भवान् शुभाङ्कः?

-- हम्……। उपार्कस्य बन्धुः।

अभिधा निजमर्यादां विपरिवर्त्त्य अनुरुद्धवती।

— उपविशतु……। अनुपदमागच्छामि।

अन्त पुरतः फलमूलादीनि आनीय सा उपहृतवती।

— गृह्णातु……।

शुभाङ्को विस्मिततया सामान्यमहसत्।

— तर्हि……, मम बन्धुः……?

— स इदानीमत्र न उपस्थितः।

— कदा प्रत्यागमिष्यति?

— दिनद्वयाभ्यन्तरे।

— तर्हि, अहम्……

— न किमपि चिन्तयतु। वक्तव्यमस्ति चेत् कथयतु।

— नहि, न तथा कश्चिद्विशेषः। प्रव्रज्यातः प्रत्यागच्छामि स्म। मनसि उदितः भवदीयविषयः। विवाहसमये निमन्त्रणं प्राप्यापि आगन्तुं नाशकम्। तदेव संप्रति मनस्यन् समागतः।

— सम्यक् कृतम्। वयमस्मिन् आनन्दिताः।

— किन्तु……

— भवतो बन्धुः नास्तीति खेदो वा?

अभिधा मुखमपश्यत् शुभाङ्कः। उज्ज्वलप्रभातस्य अरुणिमा भूषयति मुखमण्डलम्। तत्र च ऋतायते प्रणवः—सृष्टिसंहारयोः सूचिविशेषः ······ पृथिवी परिधिपरिमाणस्य सामूहिकपरिवेषः······भाव-समस्तस्य निश्चित आश्लेषः······।

अभिधा समदिशत्।

— भवत आगमनं निशम्य बन्धुः नूनं प्रसीदेत्। इदानीम् अतिथि-विशेषलाभेन अहं परितृप्ता।

— अहमपि प्रसन्नः। अन्यदा आगमिष्यामि। इदानीं प्रस्थानं प्रार्थये।

— भवतु ······। सुप्रस्थानम् ······।

शनैरुत्थाय शुभाङ्कः निजपथमारूढः। अभिधा द्वारं पिहितवती। किन्तु उपरि अन्तःपुरस्य वातायनमुन्मोच्य सा विस्मिता। श्मश्रुलः अदूरे चरणतः कण्टकमपसारयति। रक्तप्रवाहं च दमयितुं यतते। स्तोकं गच्छति। पुनः दण्डायमानो भूत्वा रुधिरं प्रोञ्छति। अभिधा विचलिता। उपचाराय आकारयितुम् उद्यता। ततः अवरुह्य द्वारम् उन्मोचितवती। किन्तु स्वरः सामर्थ्यविहीनः। दूरंगतः आश्रम-वासी। दृश्यते केवला आकृतिः। परिचिताऽपि··· अपरिचिता। अग्रे प्राकारस्य रुद्धद्वारं प्रतिकूलपवनेन इतस्ततो विचाल्यते। निरर्थकः शब्दराशिः शून्यभावं प्रगुणयति। अभिधासम्मुखे केवलः शून्यमार्गः पथिकान् ग्रसते।

अग्रे अनन्तः।

प्रतीक्षमाणः स उपविष्टः। शुभाङ्क उपस्थितः। प्रणाममुद्रया चरणं स्पृष्टवान् अनन्तः। शुभाङ्कः तं समालिङ्गत्। रुद्धवाष्पं लोतकरूपेण उभयस्य कपोले अन्तर्भावम् असूचयत्। शुभाङ्कः अनुजस्य लोतक-मपसार्य अपृच्छत्

— कः समाचारः? कुशलिनः सर्वे?

मृदुभाषी अनन्तो व्यथितः।

— न किमपि कुशलम्।

— का स्थितिः संप्रति ?

— पिता रुग्णः। ज्येष्ठमाता विषण्णा। माता तु साक्षात् चण्डी।

— तर्हि, त्वं तत्र न किमपि······

— सर्वान् बोधयितुं यत्नः कृतः परं किमपि न फलम्।

— कुत्र दोषः ?

— दोषस्तु सर्वेषामस्ति। परं न कोऽपि स्वीकर्तुं सन्नद्धः। अपि च न कोऽपि किमपि बुध्यति।

— कथमेतत् सर्वमभूत् ?

— भवतो विवाहविषयं केन्द्रीकृत्य इदानीं सर्वत्र अव्यवस्था।

— तर्हि, किमहं करवाणि ?

— ममैका प्रार्थना अस्ति।

— कथय······

— नहि······। भवान् प्रतिज्ञां करोतु।

— मयि अविश्वासः ?

— हम्······। अविश्वास एव।

— अनुजः······अनन्तो मयि न विश्वसिति ?

— नेदानीं प्रसंगः अविश्वासस्य। प्रसंगस्तु जीवनस्य कृते। तदर्थं प्रतिज्ञा आवश्यकी। सत्यस्य शपथः अपेक्ष्यते।

शुभाङ्को विस्मितः। खिन्नः स कियत्कालं चिन्तने मग्नः। किमर्थमागतः अनन्तः ? कः सन्देहः मनसि ? किमपि परीक्षितुमागतः? अथवा कनिष्ठा माता किमपि मन्त्रयित्वा एनं प्रेषितवती ? किं वा संपत्तेः प्रभुत्वभिक्षार्थम् अनन्तः समागतः ? शुभाङ्कः अहसत्।

— भवतु······। त्वद्वचनं स्वीकरोमि। प्रतिजाने च तव प्रार्थनां पूरयितुम्······।

— तर्हि, भवान् मया सह स्थानमिदं परित्यजतु।

— एतदर्थम् एतावान् श्रमः ?

— भवान् अभिजातः। आभिजात्यमेव वर्धयितुमत्र भवान् प्रशिक्षितः।

इदानीं प्रशिक्षणस्य वयः उत्तीर्णम्। अतः स्थानेऽस्मिन् भवतो निवसनम् अस्मत्कृते न शोभनम्। तत्र गृहे नाना दायित्वम्। नाना च कर्माणि। तत्सर्वं निभालयितुं को वा वर्त्तते ? पिता असमर्थः। माता च उपेक्षाशीला। सर्वं तत्र इतस्ततः। अतो भवान् प्रत्यागच्छतु। यत् कर्त्तव्यं तत्र सर्वं विचारणीयं भवेत्।

— अवश्यं प्रत्यागच्छामि।

— तर्हि, आगच्छतु।

— न संप्रति।

— कदा……?

— यदा गुरूणाम् अनुमतिः भवेत्।

— तर्हि, अहं गत्वा निवेदयिष्यामि ?

— नहि, नेदानीम् अवसरः। गुरुवर्यः नात्र सन्निहितः।

— कुत्र सन्ति ते ?

— व्रतपालनाय तीर्थंगताः।

— कदा आगमिष्यन्ति ?

— न जाने। किन्तु अल्पदिनाभ्यन्तरे। अनन्त……! इदानीं प्रत्यागच्छ, गृहे पिता एकाकी। नूनं व्यथितः स्यात्। त्वरस्व ··। माताऽपि मार्गं विलोकयन्ती प्रतीक्षमाणा स्यात्। याहि……, सेवस्व……। तेषां सेवा इदानीं ते दायित्वम्। न कदाचित् एतद् अवहेलय। गुरुपादानाम् अनुमतिं गृहीत्वा नूनमहं प्रत्यागमिष्यामि।

विनम्रभावेन अनन्तः प्रस्थितः। शुभाङ्कः द्रवितहृदयः। भावनायां च विलीनः। अत्र अहम्। अन्यत्राऽपि अहम्। एकोऽहम्। अपरश्चाहम्। एकतः अपरपर्यन्तं दूरता कियती ? अहमिकामोहनस्य विरामः कुत्र ? पुरो गच्छति अनन्तः। पुरातनक्रीडनकानि संगृह्य स खेलितुं यत्नवान्। शून्यगणनापुस्तिकाम् उन्मोच्य प्राचीनाङ्कं गणयितुं स पुनरपि व्यग्रः। प्रभुत्वस्य स्वाक्षरं नवीकर्त्तुं स नितराम्

उत्सुकः। त्रिलुप्तवंशक्रमं पुनरुद्धृत्य आभिजात्यप्रकटनाय कियन्ति नामानि भिन्नलिपिभिः उत्खोदयितुं तत्परः। …केवला आवृत्तिः। नाम्नः पुनरावृत्तिः……। नव्यनाम्ना विन्यासविचित्रा……। सत्यं तु तदेव यद् विन्यासस्य निदानम्।

केशपाशम् आवर्त्तयति अभिधा।

आत्मानं सज्जीकरोति। मण्डयति मुखमण्डलम्। दर्पणे पश्यति। धन्या भवति। ततो ध्याने आभासते स एव श्मश्रुलः। नयने नृत्यति तस्य मृदुमन्दसंलापशैली। दया जन्यते मनसि। सा ज्ञातुं न प्रभवति कथम् अस्य कृते मनसि करुणा लहरीयति? कथं च मनो विषीदति? किमर्थं, स एव पुरुषः पुनः पुनः दृग्गोचरीभवतु इति चेत उत्सहते? कथं वा अलक्ष्यप्रतीक्षा तदनुगामिनी भवति? सा वारंवारं पृच्छति—'कुत्र भवतो बन्धु.? कथमत्र स नागच्छति? किं भवान् तं न निमन्त्रयति?' उपार्क उपेक्षते। प्रभुवचनेन च तां वारयति। असहिष्णुभावेन च कुपितो भवति। अभिधा उपहसति। परमात्मानं संयमयति। विस्मतुं यतते। तथापि न पारयति। उपार्क आश्वासयति। नानारीत्या बोधयति। नीतिवाक्यमुदाहृत्य प्रवृत्तिं दमयितुमुपदिशति। निजप्रभुत्वं नयस्यति। पातिव्रत्यं विशदयति। सतीत्वमूरीकृत्य जीवनस्य याथार्थ्यं प्रतिपादयति।

अभिधा प्राचुर्यदग्धा।

अनुसंधत्ते सा—कुत्र शान्तिः? किमैश्वर्यम्……? विलासोत्तरजीवनस्य का परिभाषा? पार्थिवप्राचुर्यतः परं किमस्ति नव्यम्? का वा भोगोत्तरा स्थितिः? कथं वा जीवनं सीमितम्……? किमर्थं वा प्रियं वस्तु क्रमशः अरुचिकरम्? को वाऽत्र पूर्णप्राणः? कथमेतन्न ज्ञायते? किं निमित्तम् अज्ञानस्य चिरधारा? व्याकुलजिज्ञासानिवहे अभिधा विमनस्का।

निजोपरि दायित्वं नास्ति। गृहे कर्म नास्ति। परिचारिका नित्यकर्मणि अभ्यस्ताः। धनलोभेन अविश्वस्ता अपि विश्वस्ताः।

भृत्या प्रभुनिर्भगा:। अन्यत् सर्वं नियमबद्धम्। किं वा अधिक-कर्त्तव्यम्? अभिधा उपविशति······यथेच्छं चिन्तयति······क्रमशः आलस्यपरायणा भवति।

उपार्को विव्रतः।

इदानीमभिधा तमवजानीते। पूर्वरागम् अवनमयति। प्रतिवचनं कुप्यति। वचनपरमाणुं पर्वतीकृत्य कलहायितुं प्रवर्त्तते। किमत्र कारणम्? कथं सहसा परिवर्त्तिता? सर्वाऽपि व्यसनसामग्री सन्निहिता वर्त्तते। तथापि न रोचते? को वा पिशाचः मनसि न्यवसत्।

उपार्कः सतर्कः। अभिनयस्य सकलप्रस्तुतिमूले नारी एव प्रथम-भूमिका। सैव विदलति··· विदहति··· दारयति······ मारयति···। मुक्ता धनसामग्री एतासां दिव्यरूपं राक्षसीकरोति। नारीवृत्तिः पैशाचिकी भवति। न तत्र दया, न वा क्षमा, केवलो ग्रासः······।

कुपित उपार्कः सद्यो निर्गतः। लक्ष्ये तस्य शुभाङ्कः यन्निमित्तम् अभिधा दयार्द्रा। यदर्थम् अभिधामनसि विकृतिः। यदर्थं स्वयं सः अवधीरितः। अद्य स एव प्रष्टव्यः—किमर्थं समाधानात् परं पुनः समरः संघटते? कथं वा निकटसंपर्के स्खलनं दृश्यते? कथं च समृद्धिः संकीर्णभावभूमिं निर्माति?

शुभाङ्कः शुभानुध्यायी।

संपर्कमन्थनधिया लहरीस्वभावं विशदीकरोति शून्यमन्दिरस्य विवर्णपताका। पादपव्यादाने पवनः स्रोतोवह। प्रतिफलने पर्णवर्णिला सरसीजले लहरीलीला। मन्दिरद्वारे दोलायमाना अचिरम्लाना कुसुममाला। वदान्यदाने चूर्णलेहने गुहा सकला बकधवला।

अपराह्णस्य पवनं सेवते शुभाङ्कः शिलासने। सम्मुखे नदीनिर्झरयोः दृश्यराशिः भावरोमन्थनं मन्थरयति। नदी झरीयति। झरी च नदीभवति। स्रोतस्तु यथा तथा। उपचये श्रीमती सहस्रधारा। अपचयेऽपि तथैव श्रीधारा। वहने क्षालनप्लावनयोः अद्वैतप्रीतिः।

परं नदीयं न कदाचित् प्लावयति । केवलं क्षालयति……पावयति । इहं हि चेतनानदी ।

निजकृते यदद्य आकर्षणीयं तत्तु जनस्वभावे सारल्यम् । जनस्य च शान्तस्वरूम् । प्रतीक्षायां यदपि अमूल्यं तत्तु अधरे किंचित् स्मितम् । लक्ष्ये सार एव साक्षात्कारः । लक्ष्यप्राप्तेः पूर्वं तु जीवनरथः गति-सामर्थ्यं हारयति । यदा च गम्य आमुखीक्रियते तदाऽयं रथः निजवाच्यम् आकुञ्चति । तदनु साक्षात्कारपरिणामे अमूर्तविशेषो मिलनमर्मणि गतानुगतिकः ।

शाश्वतस्य नेपथ्यनादे वसुन्धरा तथापि सुन्दरी । तिरोभावस्य रहस्ये अन्तर्भावोऽत्र मौलिकसुरभिः । एतदर्थमिह आषाढप्रतीक्षायां जीवति वैशाखतटिनी । दृष्टिपथे आवाहनायते त्रिकालस्य ऐकिकी-धारा । निमज्जनं निजायते रूपप्रकारे । हास्यधारे अन्तर्भुक्तिरेव निवेदनायते ।

उपगत उपार्कः ।

साधुवादं व्याहरन् शुभाङ्कः प्रसन्नः । उपार्कस्तु गृहस्थस्य अहमिकां वहन् गम्भीरः । शुभाङ्कः स एव श्मश्रुल आश्रमवासी । कथाप्रकारे तस्य प्राक्तन आतिथेयभावः । सत्कारनिमित्तं च कृतकृत्यता । स वन्धुभावं नवीकृत्य अभिमानेन अवदत् ।

— किमयं जन इयद्दिने मानसमागतः ?

उपार्कः कुटिलमहसत् ।

— त्वं तु आवयोः मध्यस्थः ।

— युवयोः……? हुँ, भवेत् । वर्तमानकाले त्वं मम सम्मुखे । तव पत्नी च त्वां मनसीकृत्य मम पश्चात् । उभयोर्मनसि नूनमहं वर्तमानः कश्चिन्मध्यस्थः । सम्प्रति युवां तु कूलद्वयम् । युवयोर्मध्ये स्रोतः संसारः । स एव मध्यस्थः । मन्ये, तद्रूपं मदुपरि आरोपयितुमिच्छसि ।

— नहि । अहं मन्मार्गस्य त्वं च त्वन्मार्गस्य पथिकः । किन्तु यदा चतुष्पथ आगच्छति तत्र अवश्यम् अतिक्रमणीयं परस्परम् ।

अतिक्रमसमयेऽस्मिन् यद् आरोप्यते तत्तु परिचयमात्रम्। परं स एव परिचयः यत्र कुत्राऽपि पुनः चतुष्पथं निर्मातुं शक्नोति।

— साधु भाषितम्। जीवनपथे तु नैके चतुष्पथाः।

— सत्यम्। नैते स्वयं निर्मिताः। अपितु निर्मापिताः।

— किं निमित्तम्?

— संशयार्थम्……अविश्वासार्थम्……विभेदनिमित्तम्……।

— उपार्क! मन्ये, त्वं विभ्रान्तः।

— तदर्थमेव आगतः।

— तर्हि, किं वक्तुमिच्छसि?

— वक्तव्यं तु तवैव वचनम्।

— मम वचनम्?

— स्मरसि? एकदा त्वं प्रतिज्ञापितवान्।

— किम्……?

— मम प्रार्थनां पूरयिष्यसीति।

— उ……, तदेव……! सम्यक् स्मरामि। किन्तु किं वाऽस्ति मन्निकटे? केन प्रकारेण वा तव कामनां पूरयिष्यामि? त्वन्निकटे अपरिमिता सम्पत्तिः। पुष्कलं प्राचुर्यम्। पत्नी तु साक्षाद् देवी। किमन्यद् वाञ्छसि?

— अस्ति तथापि याच्ञा।

—तर्हि प्रार्थय। अवश्यं पूरयिष्यामि। बन्धुभावेन यावच्छक्यं समर्पयितुम् अहं प्रस्तुतः।

उपार्कः विमुखतया किमपि चिन्तयितुम् आरब्धः—एकस्मिन् मार्गे किं सर्वे गन्तुं प्रभवेयुः? सम्भवेत्……, यदि मार्गः संकीर्णो न स्यात्। किन्तु मार्गेऽस्मिन् गत्वा सर्वे किं निजलक्ष्यं लभेरन्। एतदर्थं नाना मार्गाः नैके च चतुष्पथाः। तत उपार्क गम्भीरभावेनअवदत्।

— इतः परं न कदाचित् अभिधासम्मुखमागमिष्यसि।

— उपार्क……!! किमेतद् वदसि?

— पश्य··· ·· । प्रतिमनुष्यं काचित् दुर्बलता अस्ति ।

— तर्हि, मयि अविश्वासः ?

— न त्वयि···, किन्तु मयि··· ।

— भवतु··· । बन्धुभावेन तव प्रार्थना मया अङ्गीकृता । तव स्वस्ति कामये ।

निषण्णः शुभाङ्कः प्रस्थातुमुद्यतः । उपार्कः तं सावधानीकुर्वाणः अवदत् ।

— शृणु······ । कस्मिंश्चित् परिवारे एकस्य जीवनस्य स्खलनं नाम समग्रपरिवारस्य नाशः ।

नेत्रकोणे तिर्यग् विलोक्य शुभाङ्कः प्रस्थितः । उपार्कः शनैः आश्रमपरिसरतो निर्गतः । उभयस्य अपसारे परस्परप्रेक्षाभावः स्नेह-संकीर्णः । तिक्तबोधे प्रस्थानदिशा धूसरा ।

अपराह्णच्छाया दीर्घायते ।

परमियं छाया निर्वाप्यते न तु संक्षिप्यते । तदनु नामान्तरम्······ रूपान्तरम्······। स्थूलपरिभाषया ततः तदेव तिमिरम्······। पराऽपरयोः घोरमन्दिरम्······। अदृष्टस्य विमृष्टस्वाक्षरम्······।

तथापि अनन्त· नक्षत्रस्य प्रकाशं निरन्तमन्वेषयति । पिपीलिका इव दीर्घकेशं विलमुखम् आकृषति । एकस्मिन् सूत्रे सर्वान् बद्धुं नियतं यतते । एकस्मिन् मार्गे गमयितुं च प्रोत्साहयति । किन्तु न सूत्रे सरलं भवति । न वा गुम्फावस्तु स्थिरायते । तथापि स विश्वसिति ।

— यदत्र दृश्यते तत् सर्वस्य किमपि मूलभूतं सूत्रमस्ति येन दृश्यमानं निसज्जमपि सुन्दरं प्रतिभाति । एकः स्खलति । अन्यः तत् स्थानं पूरयति । मालास्वरूपे परिवर्त्तनं दृश्यते । मालास्वभावे तु सूत्रमेव परिशेषः । तदेव अन्तर्भवनस्य मूलतत्त्वम् । तदेव सत् । तदेव शश्वत् । तदेव महत् ।

अनन्तः शनैः गत्वा कपाटं टङ्कितवान् । किं तु न किमपि प्रत्युत्तरं प्राप्तवान् । पुनरभिघातेन सह स आकारितवान् ।

— मातः ! मातः······!

मृदुरीत्या अवनी असूचयत् ।

— अनन्तः ?

— हँ, मातः !

अवनी उपागम्य आवेदितवती ।

— आगच्छ……। उपविश……।

अनन्त उपाविशत् । पुत्रमुखं विलोक्य अवनी स्मेरानना । अनन्तः साधारणरीत्या अवदत् ।

— मातः ! त्वं यच्चिन्तयसि, मन्ये, तन्मदर्थमेव ।

— कोऽवदत् ? कथम् एकचक्षुष्कतया विचारयसि ?

— जाने… , माता मे ममैव हितकांक्षिणी।

— नहि, तन्न सद् । अहम् अस्मिन् गृहे सर्वेषां हितं चिन्तयामि ।

— किन्तु……?

— अस्ति कश्चित् सन्देहो मनसि ? पृच्छ्यताम् ।

— पिता तु त्वयि अभियोगं न्यस्यति ।

अवनी अहसत् ।

— पिता ते इदानीं शिथिलः । मनसि नाना चिन्ताः । अतः सहसा कर्तुं प्रवर्त्तते । अविचार्य यत् किमपि आदिशति । अहमेतद् वारयामि । अतः स कुप्यति । अन्ततः तस्यैव वचनं कार्येण अनूद्यते । किन्तु भिन्नरीत्या भवति । भिन्नसमये च भवति ।

— अनेन को लाभः ?

— लाभोऽयं कर्मणः सफलता ।

मातुः हितदृष्टिमाकलय्य अनन्त चकितः । इदानीं हृदये तस्य गम्भीरा भक्तिः । प्रीतिपूर्णश्च स्वभावः । मनसि तथापि कौतूहलम् । स पुनरपृच्छत् ।

— मातः ! संप्रति मामेव निमित्तीकृत्य अपप्रचारो भवति सर्वत्र ।

पुनरहसत् अवनी ।

— कोऽयं विषयः ?

— सर्वे वदन्ति—सम्पत्तिलोभेन अवनी ज्येष्ठपुत्रं निष्कासयितुम् उपायान् निर्माति । सदैव निजपुत्रस्य अनन्तस्यैव अभिषेकं

कामयमाना गृहं विभिनत्ति। सर्वैः सह कलहं करोति। किमेतत् सत्यम् ?

क्षणं गम्भीराऽभूत् अवनी। अपवादः तां भृशमदहत्। वचनं संयम्य सा क्षीणमहसत्। हास्यधारे विषण्णरेखाः कपोले अचिर-मङ्किताः। अनन्तस्य विस्मयाभिभूतं नयनद्वयं विलोक्य सा अबोधयत्।

— पुत्र……! मिथ्याप्रणयिनो लोकाः।

अनन्तः अकुप्यत्।

— दण्डनीया इमे।

— नहि, तैः यदवगतं तत सत्यम्।

— मातः! तर्हि त्वम्……।

— अवबोधे किंचित् ते अवशिष्टम्। शृणु……। सत्यं नाम भयङ्करम्। तदामुखीकर्तुं साधारणानां साहसं कुतः? यदा एतस्य स्वरूपमाच्छाद्य तेषां निकटे उपस्थाप्यते तदैव ते सरल-भावेन एतत् स्वीकृत्य चमत्कृता भवन्ति। सामान्यमपि सत् अङ्गसज्जया पुष्कलं दृश्यते। सैव अङ्गसज्जा आक्षेपाय अपवादाय च प्रचुरा प्रतिभाति। यत् सत् तत्तु निर्मलम्। तत्र अपवादस्य को वा अवसरः ?

— किमपि बोद्धुं न शक्नोमि, मातः!

— समयः सर्वं बोधयिष्यति। प्रतीक्षस्व……। धैर्यं धर……।

— नहि, मातः! मनसि मे अलक्ष्यझञ्झा। सैव मां विचालयति। उपायं निर्दिश, मातः! किमहं करवाणि ?

— विषयेऽस्मिन् अतिशयं चिन्तयित्वा त्वं व्याकुलः। इदानीं विश्रम्यताम्। माऽधिकं चिन्त्यताम्।

— मातः! अद्याऽहं किंचित् प्रार्थयितुमुत्सुकः।

— प्रार्थना……? अरे! मातापुत्रयोः व्यवधानं कथम्? तव प्रार्थनाऽपि मम प्रार्थना।

— नहि, मातः! व्याकुलतया व्यवधानम् अहमेव उत्पश्यामि।

— तर्हि, कथय……किमिच्छसि ?

— वैशाखपूर्णिमा निकटायते । तद्दिने एव अग्रजस्य अभिषेकनिमित्त-
मादेशं प्रसारय ।

— अग्रजस्य······अभिषेकः ?

अवनी आत्ममुक्तमहसत् ।

अनन्तो विस्मितः ।

— मातः······! किमभूत्······? कथमुपहससि ?

— नहि, पुत्र ! अतीतं स्मरामि । भविष्यच्च कल्पयामि ।

— तर्हि, मम······प्रार्थना······?

— पूर्णा······। सद्य एव आदेशं प्रसारयामि । सर्वमायोजयितुं च निर्दिशामि ।

— मातः······!!

वाष्पगद्गदः अनन्तः जननीचरणं संस्पृश्य आनतः । अहो, जननी-हृदये करुणा······। स्वयं सा कियती न उदारा······। कियती न वात्सल्यस्निग्धा ? अवनीनयने अश्रुधारद्वयं सुस्पष्टम् । भवसंलग्ना दृष्टिः अदूरे किमपि अन्वेषयन्तीव स्थिरा । पर्याकुलकेशपाशे पवनो वेगमुन्दरः । गम्भीरमुखमण्डले स्नेहसमवायः संकेतभङ्गुरः ।

अनन्तः अनुनयति ।

— किं विचारयसि, जननि !

— वहुदिनेभ्यो बद्धवात्सल्यम् अद्यैव विमोचितं, पुत्र !

— बोद्धुं न शक्नोमि, मातः !

— एतावत् कालपर्यन्तं सर्वान् मोहतो दूरे स्थापयितुं यत्नो मे अव्याहत आसीत् । इदानीं तु मयि मोहः अङ्कुरितः ।

— आलापः अर्थं न संगच्छते, जननि !

— याहि······पुत्र ! तव प्रार्थना पूर्णा । सत्यस्य मार्गः परिष्कृतः । तत्र आत्मानम् आविष्कुरु ।

अनन्तः सानन्दं इन्नोदेवीप्रकोष्ठं प्राधावत् । अवनी तु मग्ना । तस्या दीर्घकेशविभा रजनीम् आह्वयति स्म ।

अनिरूप्यस्वनसंचारे पवनो वेगखञ्जः। चैत्रविभावरी प्रसार-प्रेयसी। नक्षत्रश्रीक्षेत्रे पुञ्जरतिः नेदीयसी। पादपोपरि आकाशः पारेश्वरः। परितः कालस्वरः अविनश्वरः। पिहितद्वाराणि गृहाणि तु प्रकृतेरनपेक्षितानि उपकरणानि एव। निद्राविधाने अन्तःपुरम् आश्वस्तिमात्रम्। एकाङ्गशय्या स्वप्नमसृणा।

अभिधा पार्श्वशायिनी।

उपार्को नास्ति। संध्यातारका इव अद्यत्वे तस्य उपस्थितिः। ततो गतानुगतिकरीतिः······स आविर्भवति······प्रतिष्ठते······। मनः सीदति। हृदयं दूयते। देहो दह्यते। तथापि वक्तुं न शक्यते। नयने अतीतमेव दोलायते। सुखस्मृतिः दुःखानि उपस्थापयति। तदनु सकलमरुचिकरम्। उपाधाने केवलमश्रु चिह्नानि अङ्कयति।

तद्दिने अभिधा अपृच्छत्।

— मामत्र विहाय दूरे भवान् किमपि नानुभवति ?

उपार्कः विमुखतया उदतरत्।

— समयः कुत्र ?

— तर्हि, भवान् किं करोति ?

— यत् करोमि तत्तव सुखाय एव।

— अहं तु नैतदिच्छामि।

— यदि तवात्र न रुचिः तर्हि सर्वमेतद् भविष्यद्वंशधराणां कृते उपयुज्येत।

— ये अनागताः तेषां कृते चिन्ता। अपितु पार्श्वे अहमस्मि। मदर्थं भवान् निष्ठुरः ?

— यदहं संगृह्णामि तत् सर्वस्य संचयः यत्नश्च तव। तदेव कुरु। नाधिकं चिन्त्यताम्।

— तर्हि, अस्य उपयोगः ?

— तद्विषये अहं चिन्तयामि।

— येन केनोपायेन भवान् संग्रहीष्यति। यथा कथंचित् च तदहं संचेष्यामि। केयं नीतिः? किमिदं सन्तुलनं जीवनम्?

— यदहं करोमि तदेव अनुकुरु। यच्च वच्मि तदेव अनुसर।

— नैतत् सम्भवेत्।

— अभिधा······?

— भवान् मोहग्रस्तः। मोहवशतः यत्र कुत्रापि अन्यायम् अनीतिं च प्रश्रयते। तदहं केन प्रकारेण समर्थयामि? कथं च दुष्कृतेः भागं ग्रहीष्यामि?

चपेटाभिघातेन समम् अगर्जत् उपार्कः।

— अभिधा······??

अभिधा चकिता। शनैश्च शय्यायां पार्श्वं विवर्त्य किंचित् अपश्यत्। प्रदीपशिखायां धूमरेखा तथापि अन्तर्वहा। उन्मुक्तवातायने तमसा शाश्वती।

सा नेत्रं न्यमीलत्।

सम्मुखे स्थितोऽभूत् उपार्कस्य कोपप्रतिमा। तदानीं सहसा उपार्कः वहिरागम्य अपृच्छत्।

— शुभाङ्कः किमर्थमागतवान्?

— भवन्तमेव अन्विष्यन आसीत्।

— ततः······?

— भवदीयबन्धुरिति मया सत्कारः कृतः?

— तदनन्तरम्······?

— पुनरागमनं प्रतिश्रृण्वन् स प्रस्थितः।

— पुनरन्यद्······?

— किमन्यद्?

— यदि स आगच्छेत् तर्हि द्वारं पिहितव्यम्।

— किमर्थम्? किमर्थम्? किं स भवतः अपमानं कृतवान्?

— नहि।

— तर्हि······किमर्थम् ?

— यद् आदिशामि तदेव पालय।

— प्रयोजनमनिर्दिश्य आदेशः कथम् ?

— जानेऽहम······ललनायाः श्रृंगारमूर्त्तिः काले काले प्रलुब्धान् आकृषति। पुनश्च तव काचित् दुर्वलता तस्यैव नाम्नः प्रशंसां करोति। किन्तु पश्य, यथाऽनयोः समन्वयो न भवेत् तथा चेतितव्यम्।

—- किमेतद् वक्ति भवान् ? मम श्रृंगारमूर्तिरेव भवन्नयने नृत्यति। तदपि भवान् पापवृत्तये विचारयति ? नान्यत् किमपि प्राप्नोति भवान् ? अहो, पौरुषम्······?

अभिधा अञ्चलमाकृष्य लोतकम् अपासारयत्। विहगस्य निशान्तरावः श्रुतिगोचरोऽभूत्। सा उदासीनतया वातायनमपश्यत्। प्रकाशः तथापि तमोगर्भः। सा दौर्बल्यम् अन्वभवत्। कथा निह्नुता। व्यथा तु तथैव। अद्य देहे अलक्ष्यरोगः। उपशमयितुम् उपचारकस्य समयो नास्ति। देहः क्षीयते। मनश्च उत्साहं त्यजति। सम्मुखे सर्वम् अरुचिकरम्। केवलशाटिकामाच्छाद्य सा कुलीनस्य पुत्री······ अभिजातस्य वधूः······।

उपशान्तो निशान्तः।

प्रकाशस्वरूपे दिवसो विपयवशः। अर्जनलोभने कर्मनिर्मन्थः श्रमविरसः। उत्कोचरचनायां कार्यालयपुस्तिका मसीविकला। ईर्ष्यात्रर्षणे परस्परपथरोधिनी कर्मशाला। वञ्चनवाञ्छातले चतुरा विपणी रजस्वला।

चिन्तनकुन्तले तु पन्था अनेकान्तः।

अनुदात्तवेशेन अद्य आश्रमं प्रविशति कुलभद्रः। याच्ञाकातरमनोमूले तस्य निजपुत्रस्य शुभानि······प्रभुत्वस्य अभिषेकः······ अभिजातस्य मर्यादा······सम्पत्तेः हस्तान्तरीकरणस्य महोत्सवः। कुलभद्रः मनाक् पुलकितः। सम्मुखे आश्रमस्य अभोगः। सौन्दर्य-

च्छटाऽत्र नैसर्गिकी। सरलश्च जीवनप्रवाहः। जीवनमात्रमिह गानाय मुक्तशैली। प्रतिदिशं स्वतन्त्रसरणिः। निर्विरोधः शाश्वतिकः। कुलभद्रः तल्लीनः।

गुहासोपाने अलेखः हास्यसरलः। निकटे उपनिषद्य शुभाङ्कः परिपृच्छति।

— प्रभो! किमस्य जीवनस्य निदानम्?
— सत्यम्‌……। आनन्दस्वभावेन इदमेव नानायते।
— किमेतस्य लक्ष्यम्?
— शान्तिः……।
— मध्ये कोलाहलस्तु पुष्कलः।
— नानात्वमत्र निदानम्।
— तर्हि, कोऽयं मे पन्थाः?
— पश्य, शुभाङ्क! मितावधिकं जीवनमिह। किन्तु नानात्वस्य सीमा नास्ति। नाना हि अनन्तम्। गुरुस्तु करं धृत्वा तावत् सहायते यावत् नानात्वम् अपरामृष्टम्। यदा तत् परामृश्यते तदा गुरुः उपदिशति—'इदानीं मार्गा दृष्टाः। चतुष्पथोऽपि विलोकितः। अत्र स्थित्वा यथारुचि निश्चयः क्रियताम्। तव अनुभव एव सर्वसहायको भवेत्'।
— ततः……
— ततः तव आविष्कृतिः अन्यार्थं किंचित् आवरणमुन्मोचयितुं शक्नुयात्।

शुभाङ्कः किंचित् विस्मितः।

— तर्हि, कियद्दूरे स चतुष्पथः?

सरलभावेन अहसत् अलेखः।

शुभाङ्कः नम्रभावेन अयाचत।

— प्रभो! तावद्दूरं भवान् मे सहायको भवतु। तस्मिन्नेव चतुष्पथे मां प्रापयतु।

शिष्यप्रार्थनया गुरुस्तरलः।

— तथास्तु......।

सश्रद्धम् अलेखः नमोमुद्रातः शुभाङ्कमुत्थापितवान्। अदूरे दृष्टिं निक्षिप्य अवदत्।

— शुभाङ्क! पश्य, पिता ते इत आगच्छति। याहि......, यथाविधि सत्कृत्य तमत्र आनय।

पथश्रान्त्या कुलभद्र इतस्ततः पश्यति। किंचिद् विचारयति। पुरःसरति......। पुनः पश्चात् पश्यति। क्लान्तिम् अपनुदति। खेदं शीतलयति। सुदीर्घं निश्वसिति। शक्तिम् आहरति। मनः स्थिरीकरोति। अलेखं मनस्यति। वक्तव्यं निश्चिनोति। प्रार्थनप्रकारं विवेचयति। गुरोः प्रतिवचनम् अनुमिनोति। तस्य च प्रतिक्रियां विमृशति। अग्रे चलति।

पश्चात् शुभाङ्कः सम्बोधितवान्।

— पितः!

परिचितस्वरं निशम्य कुलभद्रः अपश्यत्।

— अरे! शुभाङ्कः?

शुभाङ्कः प्रणिपत्य अवदत्।

— इत आगच्छतु। गुरुदेवः गुहानिकटे आसीनः।

पुत्रं निकटे प्राप्य कुलभद्रो गौरवान्वितः। स च इदानीं मार्गं निर्दिशति इति तस्य प्रथमानुभवः। कुलभद्रः सुप्रसन्नः। शुभाङ्कः अपृच्छत्।

— गृहे कुशलिनः सर्वे?

हर्षोत्कर्षं प्रकटयन् कुलभद्रो विह्वलोऽभूत्।

— सर्वं समीचीनम्। सर्वे स्वस्थाः सन्ति।

शुभाङ्कः मार्गं निरणयत्।

— इत आगच्छतु। पश्यतु......अग्रे...... गुरवः।

कुलभद्रः अन्तिकगामी

— अहो......सौम्यः!!

तरलहृदयः कुलभद्रः गुरुमुपासरत् अलेखः। पूर्ववद् धीरः। आशीर्वादवितरणे नितरामुदारः। श्मश्रुमयलपनपरिसरे तस्य कालप्रव्रज्या अर्वाचीना। लोलितचर्मरेखायां विषयधारा मर्ममलिना। मुक्तदेहे प्रकृतिः आकृतिकृपणा।

कुलभद्रो विनम्रः।

शुभपृच्छायां अलेखो मुक्तहृदयः।

— कुशलं खलु ?

— भवदाशिषा सद्य एव समञ्जसम्।

— किमन्यत् ?

— तदेव निवेदयितुमागतः। पुनश्च किंचित् प्रार्थयितुम् उत्सुकः।

— कथयतु……।

— अदूरे वैशाखपूर्णिमा। तद्दिने पुत्राभिषेकः निश्चितः अस्माभिः। यदि भवतः अनुमतिरत्र स्यात् तर्हि……

— क्रियतां नाम।

— अहं वृद्धः संजातः। संपत्तेः भार इदानीं मयि अधिकः। अतः हस्तान्तरीकरणं निश्चित्य आगतोऽस्मि। भवान् प्रथमतो मे निमन्त्रणं स्वीकरोतु।

— स्वीकरोमि।

— भवतोऽपि उपस्थितिः तत्र काम्यते।

— भवतु नाम।

— अवश्यम्……।

— अभिज्ञो भवान् किं वा वच्मि ? शुभाङ्को मे अतीत प्रियः। तदर्थं सकलमिदमायोजनम्। किन्तु भवदाशिषा स महान् भवतु इति मे कामना। स दिव्यज्ञानं प्राप्नोतु। कुलम् उज्ज्वलयतु। एतावदेव प्रार्थ्यते भवदीयचरणकमले।

— तथास्तु।

गुरोरुदारहृदयं परिचिन्वानः कुलभद्रो वाष्पगद्गदः। स तस्य

चरणधूलिमानीय प्रार्थितवान् ।

— अद्य शुभाङ्कस्य गृहगमनम् अनुमोदयतु कृपया ।

अलेखो विहस्य आदिशत् ।

— शुभाङ्क ! अनुमोद्यते ते गमनम् । पूर्णिमादिने साक्षात्कारः । संप्रति प्रस्थीयताम् ।

अलेखः गुहां प्राविशत् ।

पितृमुखम् अपश्यत् शुभाङ्कः । अलक्ष्ये निगलितमश्रुधारद्वयं अपसार्य सः अन्वनयत् ।

— पितः ! आगच्छतु……। इत आगच्छतु ।

पुत्रस्य कोमलसम्बोधने कुलभद्रो विपुलमनस्कः । स करं प्रसारयत् । शुभाङ्कः तस्य करं निजस्कन्धोपरि आलम्बयन् अवदत् ।

— आगच्छतु……।

— इतो मे चिन्ता नास्ति, पुत्र !! त्वं मे सहायः । त्वमेव मार्गदर्शकः । अपराह्णम् अवरोहतु । रजनी आगच्छतु । चन्द्रो न विकशतु । अमावस्या तमोजालं विस्तारयतु । मेघो यथेच्छं गर्जतु । आकाशः करकान् पातयतु । कालो मां कवलीकरोतु । तथापि भयं नास्ति, पुत्र……!

पथिकद्वयस्य सुप्रस्थाने अपराह्णयात्रा मार्गविरला । अग्रे दीर्घो दिग्वलयः । पश्चिमाधरे लाक्षारसः सरसः । अभिधेयत्वसंधाने संध्या मन्दिरद्वारस्था । अमावस्याया अङ्कनिरूपणे गोशालादीपाली देहलीरसिका । सरीसृपस्य अभिसारे स्वैरशिरोमणिः ग्रामसरणिः ।

आलग्नं कर्मणो मध्यान्तरम् ।

दायित्वसर्वस्व उपार्कः श्रान्तः । कर्मशिविरे एकाकी आसीनः । परिचरा निजचर्चायाम् अवकाशभोगिनः । स्वयं स निजमर्मणि विलीनः । दीर्घदिनेभ्यः गृहादागतम् । तदनु कर्मैव मनस्तत्त्वे मुख वन्धः । आभिजात्यप्रतिष्ठा च लक्ष्यसमष्टिः । परमद्य सरणिं रुणद्धि तद्दिनस्य गुरुसाक्षात्कारः ।

सहसाऽत्र अलेखः समागतः। कुशलम् अपृच्छत्। परिवाराय स्वस्ति व्यतरत्। ततो भृशमकुप्यत्।

— त्वम् एतावान् नीचः संजातः ?

अधोमुख उपार्कः प्रतिक्रियामसूचयत्।

— मन्ये, शुभाङ्कः भवन्तं प्रतीपयितुं यतते।

अलेखः दृढं प्रत्यरुणत्।

— उपार्क ! गुरुः नानीतिं समर्थयति। सत्यनिमित्तमेव तस्य पक्षपातः। त्वादृशानां नयने पार्थिवसंपत्तिरेव भूयसी। अतः यां कामपि अनीतिं नीतित्वेन ग्रहीतुं प्रतिपादयितुं च युष्माकं प्रयत्नः। तदर्थं युष्माकं मोहः……ईर्ष्या……असूया। पुनश्च सर्वमेतत् युष्माकम् अवबोधं प्रतिरुणद्धि। अतः सर्वे युष्माकं सम्मुखे शत्रुरूपेण दण्डायमाना भवन्ति। युष्माकं भीतिः वर्धते। किन्तु आभिजात्यव्याजेन युष्माभिः अहंकारः प्रदर्श्यते। उपार्क ! बहुवारबोधितस्यापि ते अवबोधः तथैव संकीर्णः। इदानीमपि समयः अस्ति। पुनः विमर्शं कुरु। संसारतः किं नीत्वा गमिष्यसि ? इदं सुन्दरशरीरमपि त्वया सह न यास्यति। कस्य कृते मोहः ? किमर्थं संकीर्णता ? कथं हीनस्वभावः ?

अलेखो विरतः। विमुखतया च प्रस्थातुमुद्यतः।

उपार्कः अन्वनयत्।

— सत्कारं मे स्वीकरोतु।

— नहि……। नाऽयम् अवसरः। इदं ते कर्मशिविरम्।

— तर्हि……। गृहे मे पादस्थापनाय कारुणिको भवतु कदाचित्।

— बहुवारं त्वयाऽहं निमन्त्रितः……अनुरुद्धः……अनुनीतोऽपि। किन्तु यावत्कालं गृहे जोवनस्य न सन्तुलनं, न वा सत्यस्य प्रतिष्ठा तावदहं निमिन्त्रणं स्वीकर्तुं न प्रसन्नः।

अलेखो निष्क्रान्तः।

उपार्कः प्रकृतिस्थः। मनसि क्लिन्नाऽभूत् अभिधायाः शीर्णप्रतिमा। अहो……एषु एव कियद्दिनेषु अभिधा कियती न म्लाना ? आकृतिः

तस्याः कियच्चापल्येन नावतीर्णा ? शरीरं कियत् शीघ्रं न पुष्टि-विहीनम् ? किन्तु रोगः कुत्र ? कलहभयेन वराकी मौनमाचरत्। मनोमोचनाय सुयोगो न प्राप्तः। व्रतच्छलेन उपवासच्छलेन च आत्मानं कृशीकृतवती। परं मङ्गलस्य अवसरो नागतः।

अन्तराले चिन्तायाः समुद्रिका। परिपृच्छामात्रं प्रतिवचनस्य अभावः। सम्बोधने गोपनलोतकम्। वेशे यथेच्छपर्याकुलता। आभूषणे निर्लोभदृक्पातः। गतिमात्रम् अनन्तरस्य अनपेक्षा। आचरणमेतद् अभिधायाः ? सत्यम्……। कियत्त्वरया सा न परिवर्त्तिता ?

उपार्कः सकृदभिधां सकृच्च गुरुमचिन्तयत्। ततो व्यमृशत् —सत्यम्……, किमस्ति प्रभुत्वेऽस्मिन् ? किमहं नेष्यामि। संसारतः ? कथं वा नेतुं शक्नोमि ? सर्वमत्रैव त्यक्तव्यम्। अपरं च यदर्थं सर्वमिदमानन्दकरम्……यदर्थं च जगत् सुन्दरम्……यदर्थं दृश्यमानं स्नेहसुलभम्……यदर्थं वा वर्त्तमानं रुचिकरम्……तत्तु न परिचिनोमि। अहो, व्यामोहो मयि ? अहो, स्खलनं मम ? अहं कियान्न स्वार्थपरः ? कियान् अहं न संकीर्णः ? कियान्न हृदय-हीनः…? उपार्कः शय्यारूढः।

अनुतापस्य अश्रु प्रथमवारं तस्य नेत्रकोणमस्पृशत्। मनः तस्य चञ्चलमभूत्। स शयितुं नापारयत्। प्रतिक्षणम् अनपेक्षितं दहनम् अन्वभवत्। अस्थिरभावेन स इतस्ततो विलोक्य शब्दापितवान्।

— अरे……! को वर्त्तते ?

परिचारकः उदतरत्।

— अहमस्मि……। आदिशतु……।

— घोटकाः अत्र सन्निहिता वा ?

— सन्ति।

— चालको वर्त्तते ?

— वहिः सुप्तः।

— जागरय……

आदेशं प्राप्य चालक उपस्थितः। शनैश्च नम्रोऽभूत्।

— गन्त्री सम्यक् अस्ति ?

— समीचीना।

— तर्हि, सज्जीभव……।

— अकाले……कुत्र यात्रा ?

— रात्रो……घोटकाः……

— बिभेषि वा ? अहं चालयिष्यामि……

— तथा न वच्मि……। भवतु……अहं प्रस्तुतः। वहिरागच्छतु भवान्।

निदाघरजनी उपभोग्या आसीत्।

अन्धकारे उपार्कः गृहं प्रापितः।

रक्षी सविस्मयं मुख्यद्वारम् उन्मोचितवान्। चालकः यथास्थानम् अश्वान् संस्थाप्य विश्रान्तुं गतः। परिचारकः अन्तःपुरस्य मार्गं निर्दिश्य पूर्ववत् द्वारं पिहितवान्। तेनैव वेशेन उपार्कः अभिधा प्रकोष्ठम् अभिसृतः। सपदि अपश्यत्……द्वारं सर्वम् उन्मुक्तम्। स विस्मितः। मृदुगत्या च समचरत्। पश्चात् द्वारं पिहितवान्। प्रदीपं च अदीपयत्। पुनरपि चकितः। ……विपर्यस्ता पर्यङ्कशय्या शून्या। हृदये तस्य स्पन्दनं प्रगुणितम्। स इतस्ततो दृष्टिमचारयत्। ततः किंचित् आश्वस्तः। किन्तु खिन्नोऽभूत्—कटमात्रशय्यायाम् आलुलायते अभिधा। उन्मुक्ता कवरी तस्या मुखार्धम् आच्छादयति। कति केशाः कटमतिक्रम्य भूतलं स्पृशन्ति। उपेक्षित वसनं शय्यायते। मुद्राविहीनकरद्वये आभरणं विवर्णम्। शिथिलपादयुगलस्य वक्रस्थितिः भीतिमावहति। उपार्कः भयेन शब्दापितवान्।

— अभि……! अभि……!

अभिधा पार्श्वशायिनी अभूत्।

— अभि······! अभि······!

नाम्नः संकुचिताक्षरद्वयम् अभिधायाः चैतन्यमस्पृशत् । परिचित-मिदं प्रीतिपूर्ण नाम । तेन सह स्वरोऽपि परिचितपूर्वः । सा नेत्र-मुन्मोच्य चकिता । सहसा उत्थाय वसनाकुञ्चनपुरःसरम् आत्मानं सज्जीकृतवती । किन्तु किमपि निश्चेतुं उन्मादिनी इव जल्पितु-मारभत ।

— कुत्र अभी······? अहम् अभी ?? नहि······। र्तहि······, कः 'अभि······! अभि······!' आकारितवान् ? भवान्······? इयद्रात्रौ······?

— हम्······।

— किमयं स्वप्नः ·····? किमियं माया······? अथवा मे मतिभ्रमः ?

— नहि······। एतत् सत्यम् ।

— सत्यम्······स आगतः ? स तु न भवादृशः । नैतावान् अचञ्चलः ? नैतावान् निरहंकारः नैतादृशः प्रीतिकातरः ? सत्यं कथयतु 'को भवान् ?'

— स एवाऽयं पुरुषः, अभि······!

— भवान्······??

— एतदेव सूचयितुमागतः । मया त्रुटितम् । मम स्खलनं सम्यक् मया अवबुद्धम् । त्वन्निकटे तदेव स्वीकर्तुं प्रधावन् उपस्थितः । अहम्······अन्धः······स्वार्थपरः······संकीर्णः······विचारमूढः ।

— भवान् स एव पुरुषः ?

— अभि······! त्वामहं बोद्धुं न प्राभवम् । प्रभुत्वमोहेन अहं अन्धः संजातः । अतः त्वां हारितवान् । अद्य तु त्वामैव अन्विष्यन् अत्र दण्डायमानः ।

— किमपि बोद्धुं न प्रभवामि । किमपि न मे रोचते । भवान् विश्राम्यतु······स्वपितु ।

— न माम् अन्यथा चिन्तय, अभि ! त्वन्निमित्तं मयि सद्बुद्धिः उदिता । त्वदर्थमेव गुरुः स्वयं मन्निकटमागतवान् । पुनश्च

कथितवान्—'यावत्कालमावयोः न सौमनस्यं तावन्न......।"
अभिधा विपरिवर्त्त्य वातायनसमम्मुखं गतवती । उपार्कः पूर्वकथनं विरमयन् कातरकण्ठेन समबोधयत् ।

— अभि......

अभिधा निरुत्तरा । सरलतया बहिः पश्यन्ती दण्डायमाना । उपार्कः कियत्क्षणं नीरवः । तस्य नयनाग्रे अभिधायाः पश्चाद्भागः । तदुपरि आलम्बमाना विपर्यस्ताः केशाः । एकपार्श्वे दोलायते स्खलिताञ्चलम् । उपार्कः अतीव कातरः ।

— न मां क्षमसे, अभि......!

अभिधा तथापि प्रतीपा ।

— किं मे प्रायश्चित्तं त्वया कर्तुं न शक्यते ? तर्हि, अहमितः चिराय प्रस्थानं करोमि ?

उपार्कः प्रस्थातुमुद्यतः ।

अभिधा विवर्त्य अवदत् ।

— शृणोतु......।

उपार्कं सतृष्णमपश्यत् ।

उपार्कस्य नेत्रे प्रथमवारम् अश्रु विलोक्य अभिधा विलापविह्वला संजाता । उन्मादिनी इव प्रधावन्ती सा तं दृढमालिङ्गत् । अभिधायाः शीर्षकपोले अश्रुप्लावनम् अवलोक्य उपार्कोऽपि अस्थिरः संजातः । उभयोः अश्रुतर्पणे निशीथशय्या तथापि संगमोत्सुका आसीत् । किरणप्रणिधाने शुभस्वभावाः प्रातःप्रदीपाः ।

वस्तु भग्नं चेत् तस्य पुनर्निर्माणं भवेत् । जीर्णं चेत् तस्य पुनरुद्धारो भवेत् । प्रकृतिः शीर्णा चेत् पुनर्नवीना भवेत् । संसारः अस्वस्थश्चेत् पुनः स्वस्थो भविष्यति । अनाविष्कृतश्चेत् आविष्करिष्यते । दुर्गमश्चेत् अभिगम्यो भवेत् । दुरवगमश्चेत् अवगम्यो भविष्यति । दुरधिगमश्चेत् अधिगम्यो भवेत । परं किमधिगम्यते ? किमवगम्येत् ? अनुभवे तु शान्तिसारा ऋतस्य धारा......अमृतस्य धारा......।

विमर्शविलीन उपार्क उपविष्टः सभाजनगृहे। सद्योभूषिता अभिधा तदीयकरे उपाहारं समर्प्य उपविष्टा। उपार्कस्य प्रसन्नमुखे हास्यमखेलत्। अभिधा स्मेरमुखी। किन्तु उपार्कस्य चकितनिरीक्षणे अभिधा श्रीहीना। मुखं तथापि शुष्कम्। नयनतले श्यामिकास्तरं रतिकातरम्। अधरं न मनोहरम्। उपार्कः कारुणिकः संजातः। किंचित् अभिमानेन उक्तवान्।

— अभि······! त्वं जीवनमिदं भारत्वेन स्वीकृतवती। तदर्थं गरीयसि चिन्तने निमग्ना।

अभिधा उपार्कस्य मुखमपश्यत्।

उपार्कः अहसत्।

— पश्य, अभि······! किमस्ति इयति चिन्तने ? हसितुं यतस्व···। पुनश्च यदा दुश्चिन्ता आयाति ताम् उपहस। ततो मधु मिलिष्यति।

अभिधा सामान्यमहसत्। उपार्कः ताम् अद्य संपश्यन् प्रसन्नः। साक्षादिदं तदेव हास्यम्··· यन्निह्नुतमासीत्······यच्च सद्यो विकशितम्······। उपार्कः शनैः उपरि-प्रासादमुत्थितः। अभिधा वहिरपश्यत्। मेघमुक्तः तपनः पुनः प्रकाशं विकिरति। प्राकारद्वारम् उन्मुक्तमस्ति। अदूरमार्गे कश्चन आगन्तुकः। सः इतोऽभिगच्छति। तरुणः अभिजात इव लक्ष्यते। अभिधा निर्निमेषं तमपश्यत्। आगन्तुकः मुख्यद्वारम् उपस्थितः। रक्षी द्वारं रुद्धवान्। आगन्तुकः अपृच्छत्।

— मन्ये, इदम् उपार्कमहोदयस्य गृहम् ?

रक्षी दृढमवदत्।

— हाँ······एतदेव। दर्शनार्थम् अनुमतिः अपेक्ष्यते।

आगन्तुक इतस्ततोऽपश्यत्।

अभिधा मध्यद्वारम् उपस्थिताऽसीत्।

स ताम् अवलोक्य सम्बोधनमुखेन अवदत्।

— देवि ! केनोपायेन अनुमतिं प्राप्नुयाम्……?

अभिधा तत्क्षणमादिशत् ।

— रक्षिन्……! प्रवेशय आगन्तुकम् ।

रक्षी मार्गं निरदिशत् ।

आगन्तुकः मध्यद्वारमुपस्थितः । सविनयं नमस्कृत्य अपृच्छत् ।

— देवि ! भवती गृहपत्नी ?

कथयतु……।

— अहं सुन्दरग्रामनिवासी । नाम्ना अनन्तः……कुलभद्रस्य पुत्रः ।

— कुलभद्रः ?

— मन्ये, श्रुतपूर्वं स्यादिदं नाम ।

— हूम्……इदानीं स्मरामि । आगच्छतु……अन्तरागच्छतु……।

अभिधाहृदये स्पन्दनमखेलत् । सा चञ्चलाऽभूत् । शीघ्रतया सत्कारनिमित्तं धात्रीमादिशत् ।

— सभाजनगृहं प्रवेशयन्ती सा तमनुरुद्धवती ।

— उपविशतु……। कथयतु……, कः समाचारः ?

अनन्तः निमन्त्रणपत्रं प्रसारितवान् ।

अभिधा कौतूहलिनी ।

— किमिदम्……?

— किं विवाहः ?

— नहि……अभिषेकः ।

— कस्य……? भवतः……?

— नहि, मम अग्रजस्य……

— अग्रजः ?

— नाम्ना शुभाङ्कः ।

अभिधानयने सहसा भावो विपरिवर्त्तितः । सा नितरां प्रसन्ना कौतूहलिनी च भूत्वा आकारितवती ।

— अयि......! उपरि किं करोति भवान् ? अध आगच्छतु ।
पश्यतु......, कोऽत्र आगतः ।
उपरि उपार्कः अपृच्छत् ।

— कस्तत्र......?

— भवदीयबन्धुशुभाङ्कस्य अनुजः ?
एतत् श्रुत्वा उपार्कः त्वरया आगतवान् ।
अनन्तः प्रणामं न्यवेदयत् ।

— अभिवादये......।

— नमस्ते । कथं वर्त्तते अग्रजः ?

— सम्यक् ।
अभिधा सोत्साहम् उक्तवती ।

— शुभाङ्कस्य अभिषेको भविष्यति । निमन्त्रणमानीय अयम् उपस्थितः ।
उपार्कः हर्षमसूचयत् ।

— शोभनम्......। अभिषेकः कथम् ? न विवाहः......?

— यथा पितृपादनाम् आग्रहः ।

— भवतु......। कदा भवति ?

— तिथिः वैशाखपूर्णिमा ।

— भवतु......। पुनरन्यत् ?

— इदं दम्पतीनिमन्त्रणम् । अवश्यमुपस्थातव्यम् ।

— जानीमहे......। अवश्यं गमिष्यामः ।

— भवतु......। प्रस्थानं प्रार्थये ।

— भवदीयसुप्रस्थानमभिलषामः ।

अनन्तः मुख्यद्वारम् अतिक्रम्य निष्क्रान्तः । अभिधा तदीयमार्गं विलोक्य चिन्तारता । उपार्कः तां वारितवान् ।

— अरे......! किं चिन्तयसि ?

— तद्दिने भवान् एकाकी गच्छतु ।

— किमर्थम् ?

— नाऽहं गमिष्याति। मम गमने तु भवान्······

— अरे······, नहि। नास्ति मनसि मे सन्देहः। त्वदर्थमेव हारितनिजत्वं मया पुनरधिगतम्। पुनस्तत् हारयितुं नेच्छामि। एहि······अन्तःपुरमागच्छ। किं पुनरभिमानेन ?

इत्थमपि स्वस्थीकृतसम्पदा जीवनं नवीकर्तुं प्रभवति जनः। अहंकारमवनमयन् असाध्यं साधयति। अविवेकम् अवदम्य साफल्यमाहरति। प्रभुत्वं सम्यक् उपयुज्य शक्तिमान् भवति। कर्मपरिसरं संयमयन् दृढः संजायते। प्रवृत्तिं सुनियम्य पूज्यो भवति। ततो निसज्जं सज्जीभवति। ऊषरं सस्यं प्रसूते। मरुः चारूणि तनुते।
हर्षप्रकर्षे उन्मोदते अनन्तः।
व्यापारे आदरस्य परिसीमा वृहती। आयोजने मनोयोगः अभूतपूर्वः। उत्सुकनिमज्जने तस्य अग्रजप्रीतिः विनयशीला। अनुभवगौरवे च अनुयायिभावना वशंवदा। साधारणसौमनस्ये इदानीं तु महोत्सवो हितैषी। सौहार्दसूचने साक्षात्कारो बान्धवीयः। स्नेहविभवा च अतिथिचर्चा।

अनन्तः अभिषेकस्य साफल्यं कामयमानः शन्नोदेवीमुपगतः। उदासीना शन्नोदेवी पूर्ववत् पूजाव्यापृता। अनन्तो न्यवेदयत्।

— मातः! श्वः वैशाखपूर्णिमा।

— अनन्तः······?

— हुँ······मातः! सर्वमायोजितम्। सर्वस्मिन् कार्ये उत्सुकाः सन्ति साधारणाः। अतिथयः क्रमशः समागच्छन्ति। तेषां सौविध्यनिमित्तं यथास्थानं जना नियोजिताः।
शन्नोदेवी निरुत्तरा।
अनन्तः सोत्साहं विजल्पति।

— मातः? चिन्तया अलम्। सुपरिकल्पितो नियोगः। कार्यभारः सम्यक् वितीर्णः। न कुत्राऽपि शैथिल्यम्। परिचालनं सुचारु

भवति ।

शन्नोदेवी अन्यमनस्का ।

अनन्तः सविस्मयमपृच्छत् ।

— मातः ! न वदसि कथम् ?

शन्नोदेवी सस्नेहमपश्यत् ।

किन्तु नेत्रे तस्य अश्रु विलोक्य अनन्तः आश्चर्यान्वितः ।

— मातः ! विलपसि ? किमस्मिन् अभिषेके तव सम्मतिर्नास्ति ? अग्रजस्य सुखं न कामयसे ?

शन्नोदेवी विव्रतभावेन तस्य मुखे करं निधाय अवदत् ।

— नहि······नैतद् वद, पुत्र··· ! अग्रजस्य ते शुभं नूनं कामये······ भृशं कामये······।

— तर्हि, विलापः कथम् ?

— एका स्मृतिरुदिता ।

— कैषा स्मृतिः ?

— वैशाखपूर्णिमायाः······

— कथय······नु ?

— एकदा दिनेऽस्मिन् तव अग्रजनिमित्तं मम प्रार्थना प्रथमा आसीत् । अस्मिन्नेव दिवसे तस्य सौभाग्यकामनया मया सः समर्पितः । पुनश्च सैव पूर्णिमा । तदानीं च तस्य अभिषेकः । सर्वमेतद् विमृश्य किमपि अपूर्वमनुभवामि, पुत्र !

— शुभमेतत् । नान्यथा चिन्तय ।

— हँ······पुत्र ! शुभम्······।

— किन्तु, मातः ! इदानीं त्वमित्थं वदसि । तद्दिने माता······

— अवनी······?

— हम्······। साऽपि अन्यमनस्का आसीत् । सर्वमेतद् वोद्धं न प्रभवामि, मातः ! किं वा सत्यं निह्नुतमन्तराले ?

— नहि, पुत्र ! न तथा किमपि । उत्तीर्णवयसि एवं कदाचित् जनानां

विकारो दृश्यते। तदर्थं चिन्ता माऽस्तु। कर्मणि आत्मानं व्यापारय। अन्यथा कुत्रचित् अव्यवस्था स्यात्।

अनन्तः नम्रभावेन वहिरागच्छत्। मनसि तथापि संशयस्य स्पर्शलेशः।

पूजाप्रकोष्ठे विनयावनता शन्नोदेवी। पुत्रस्वस्तिकामनातले तस्याः स्मृतिरोमन्थः अतीतग्रासी। शाश्वतयाजने पौर्णमासी सैव प्राचीनप्रमा। दिवाप्रवाहः नामान्तरे महाकालः। तत्र आशाबन्धो नाम जीवनधारणार्थं कतिपयकल्पनाराशिः। सूत्रपरामर्शे तु सेयं धारा अनन्ता। सूक्ष्मतानिरीक्षणे शन्नोदेवी आत्मविस्मृता।

द्वारे दण्डायमाना अवनो।

शन्नोदेवी क्षीणमपश्यत्।

— अवनी ?

— हूँ…… भगिनि !

— अभिषेकस्य प्रारम्भिकं तु……

— प्रारब्धम्……। सर्वे सज्जीकृताः। पिता भूषितः। पुत्रावपि भूषितौ। त्रयस्य मस्तके अद्य अभिषेकस्य उष्णीषं शोभते। किन्तु परिधापनसमये शुभाङ्कस्य मस्तकात् वारत्रयम् उष्णीषं स्खलितम्।

— अवनी……?

— हृदय मे कम्पते, भगिनि……! किमपि कर्तुं न प्रवर्त्तते मनः।

— अवनि ! इयद्दिनानि व्यतीतानि। कदाचिदपि ते च्युतिर्नाभूत्। इदानीं वा कथं तरला भविष्यसि !

— सोढुं न शक्नोमि, भगिनि……!

— नहि, अवनि ! सहनीयमेव। मनः पुनश्च दृढीकरणीयम्। अन्यथा सर्वं निष्फलं भवेत्।

— बाल इव अनन्तो गौरवान्वितः। अभिजातभूषणेन पिताऽपि तादृशः। शुभाङ्कस्तु पूर्ववत् धीरः……स्थिर……।

— नेदानीं हृदयदौर्बल्यं शुभकरम् यथायोग्यं सर्वं व्यवस्थापय।

अन्यथा अतिथयः अवमानिताः स्युः।

अञ्चलाग्रे लोचनं परिष्कृत्य अवनी शनैरपसृता। गृहे वहिश्च आगन्तुकानां पूर्वाह्णपरिचर्या पारम्परिकी। मङ्गलवाद्यध्वनिः परिसरं मुखरीकरोति। कर्मनियुक्तानां व्यापृतितले पौर्णमासी सामाजिकी। सुन्दरग्रामस्य प्रतिमार्गं स्वागतिका।

प्रासादचूड़ातः अपराह्णमवातरत्।

नदीबालुका शीतलाऽभूत्। स्वेदमपहर्तुं प्रवृत्ता मनोज्ञसंध्या। ललनाविलासे सुरभिमतनोत् मल्लिकामाला। नववधूनयने मधुमत्ताऽभूत् कज्जलकला। पिप्पलपर्णेषु स्वरमभरत् पवनलीला। निदाघवेला मार्गकेवला।

साक्षात्काराय सज्जीभूतः शुभाङ्कः। कुलीनो वेशः। प्रसन्नं लपनम्। प्रफुल्लं नयनम्। विकसितम् अधरम्। विनम्रा भङ्गी। नमोमुद्रा प्रासङ्गिकी। प्रतीक्षा दर्शनसारा। परिप्रश्नः परिमितः। सन्देशः स्वस्तिकल्पः।

परिचारको न्यवेदयत्।

— दम्पती दर्शनमिच्छतः।

शुभाङ्कः आदिशत्।

— उपस्थापय……।

दम्पती उपागच्छतः।

शुभाङ्कः दृष्टिं प्रासारयत्—आलोकमालातले केयं मालिन्यमालिका……? केयं कालकवलिता सरलरेखा? वेशैकशरणा केयम् अपराह्णस्य अरुणा……? कोऽयं सहचरः? नश्वरस्य निर्दिष्टदृष्टान्ते कोऽयं क्रमभङ्गुरः? परिचितपुराणे केयं व्यवधान विलुलिता प्रतिमाद्वयी … उपार्कः … अभिधा … ? अभिधा … उपार्कः ?

वितमस्नेहाञ्जलिविनिमये परस्परमनोनिवेदनं भावपूर्णमभूत्।

परस्परविलोकने आत्मविवरणी श्रद्धाविधूता। हृदये पूर्वकालस्य तथ्यविमन्थः सद्यः उपशान्तः। उद्बुद्धस्मृतितले अनुरागो नवीकृतः। स्मितं प्रसारयन् शुभाङ्कः स्वागतं व्याहरत्।

उपार्कः अपृच्छत्।

— आश्रमतः अन्ये के आगताः ? मन्ये, गुरुचरणाः……

— आगमिष्यन्ति… …। कथं वर्त्तते भवान् ?

— अभिधा तु अनेकदिनेभ्यः पीडिता आसीत्।

— तथैव दृश्यते।

— इदानीं तु……

— त्वादृशं जनं प्राप्य कथं वा स्वस्था न स्यात् ?

अभिधा सहसा चकिता। नयनाग्रे तस्या अभिजातश्मश्रुलयोः समन्वयमनोभूमिमावहन् दण्डायमान आतिथेयः स एव आश्रमवासी। परिच्छदो विवर्त्तितः। आकृतिः विलक्षणा अभूत्। किन्तु व्यवहारे प्रतिवाक्यं स्नेहरङ्को भावनिर्यासः।

उपार्कः अवदत्।

— कियद्दिनतले गुरुदेवः साक्षात् समागत आसीत्।

— सर्वं श्रुतम्। मन्ये, इदानो स्थितिः परिवर्त्तिता।

— मम स्खलननिमित्तम् अहम् अनुतप्तः, शुभाङ्क ! । अद्य तु बन्धुभावेन त्वं मे त्रुटिं शोधयिष्यसीति धिया समागतः।

— अरे ! कथं विषण्णोऽसि ? जीवने तु नाना चतुष्पथाः।

— तद्दिने सत्याबद्धभावेन अभिधाया दर्शनमपि त्वदर्थं मया निषिद्धम् अनेन अमङ्गलम् आमन्त्रितं मया। इदानीं तु……तव दर्शनार्थम् अभिधामानीय उपस्थितः। मन्ये, हृदयं मे अवगमिष्यसि।

शुभाङ्कः अहसत्।

— अरे ! तदेव बन्धुहृदयं पर्याप्तम्। किमधिकं कामयिष्ये।

— नहि, कथय……। सत्यबद्धभावेन तव कामनामपि अहं पूरयिष्यामि।

— मम कामना तु पूर्णा सम्प्रति। एकदाहं गुरुदेवनिकटे युवयोः सौमनस्यं प्रार्थितवान्। तदिदानीं पूर्णम्। इदमेव महत् दम्पती-दर्शनेन।

— शुभाङ्कः?

— आगच्छ......, अन्तरागच्छ......।

अभिधा उभयोर्मुखं विलोक्य सरसहृदया। किन्तु मनसि लहरीयति, आश्रमस्य तदेव निर्विशेषसौजन्यम्......शून्यमन्दिरस्य सीमारेखातले आश्रमस्य वक्रः पन्थाः......दोलायमाना वीथिलतिका-......पुनश्च लघुचतुष्पथाः......।

श्रद्धाकुसुमानि उपहृत्य शुभाङ्कः मातृदेवीनिवासस्य मार्गं निरदिशत्।

— आगम्यताम् .....।

मातृमन्दिरे प्रविश्य अभिधा आत्मविस्मृता।
वैशाखपूर्णिमा प्रकाशमतनोत्।

जनसमागमे कोलाहलः क्रमशो वर्धितः। दानभोजनेषु अतिथय आप्यायिताः। परितृप्ताः सुप्रस्थानाय प्रवृत्ताः। अनागता यथाकालं संप्राप्ताः। तर्पणप्रस्थानयोः धारा क्रमवाहिनी वर्त्तते। सकलकार्यपर्यवेक्षणे अनन्तः न्यस्तनियोगः।

ससम्मानम् अलेखमादाय कुलभद्रः गृहम् उपगतः। गुरुदेवपरिपूजने समग्रोऽपि परिवारो निमग्नः। सर्वेषां समानकालीनोपस्थितिं विलोक्य अलेखः प्रसन्नः। मृदुवचसा स स्वस्ति व्यतरत्। सहसा उपार्कम् अभिधां च अभिलक्ष्य स अपृच्छत्।

— उपार्क! इतः परं, मन्ये, तव गृहं प्रति मम निमन्त्रणं भवेत्।
उपार्कः विनीतः।

— सर्वं जानाति देवः। तदेव आवयोः कामना।

— शान्त्या निवस, जाते......!
ततो दृष्टिं निवर्त्य अलेखः किंचित् गम्भीरोऽभूत्।
शान्तोदेवीं विलोक्य स स्मारितवान्।

— देवि ! अद्य वैशाखपूर्णिमा।

वाष्पवृत्ति प्रतिरुध्य सा अवदत्।

— जाने, गुरुदेव !

कियत् क्षणं नीरवो भूत्वा अलेखः अवनीमपश्यत्।

— देवि ! अद्य वैशाखपूर्णिमा।

— जाने, प्रभो……!

समयेऽस्मिन् वहिर्व्यापृतः कुलभद्र उपस्थितः। तं निरीक्ष्य अलेखः अभिलषितवान्।

— कुलभद्र ! इदानीं प्रस्थानसमयः।

कुलभद्रः सविनयं व्यज्ञापयत्।

— अभिषेकोऽयं भवदीयकरकमलेनैव भविष्यति। तदर्थं सर्वं सन्नद्धम्।

समयेऽस्मिन् अनन्तः व्यग्रभावेन समागच्छत्। शुभाङ्कं विलोक्य सः अभाषत।

— अग्रज ! दर्शनाय केचन अतिथयः प्रतीक्षन्ते। वहिरागच्छतु……।

कुलभद्रो वारितवान्।

— नहि। इदानीं त्वमत्र तिष्ठ। अभिषेकसमयः उपस्थितः। तत् सर्वं समाप्य स वहिर्गच्छेत्।

अलेखः गम्भीरभावेन स्मारितवान्।

— कुलभद्र ! अद्य प्रतिज्ञापितो दिवसः।

सहसा कुलभद्रः चकितः।

— गुरुदेव ……?

— इयं वैशाखपूर्णिमा तव संकल्पं पूरयिष्यति।

— निष्ठुरो न भवतु। पुत्राभिषेकनिमित्तं भवानपि अनुमतिं दत्तवान्।

कारुणिको भवतु……।

— अनन्तोऽपि तव पुत्रः कुलभद्र !

— गुरुदेव……?

अनन्तः विक्षिप्तभावेन अगर्जत्।

— नहि, नैतत् सम्भवेत् अभिषेकाय अग्रजस्य अधिकारः। न तदन्यथा

भवेत् । नाऽहं कुलकलङ्को भवेयम् ।

शन्नोदेवी अनन्तं पार्श्वमाकृष्य अवोधयत् ।

— अनन्त ! कथं न बुध्यसि ? गुरुः अस्माकं पुरोहितः । स एव कुलस्य रक्षकः । स एव अधिकतया अस्माकं मर्यादां चिन्तयति ।

— नहि, मातः ! कथमग्रजस्य अधिकारं वलात् नेष्यामि ?

— नाऽत्र अधिकारस्त विचारः । सत्यस्य, संकल्पस्य, नीतेश्च रक्षा-विषयो गरीयान् ।

— नहि, नैतद् भवेत् ।

अनन्तस्य विक्षिप्तभावमालक्ष्य कुलभद्रः कातरोऽभवत् ।

— गुरुदेव ! पुनर्विचारयतु भवान् ।

— त्वमेव विचारय, कुलभद्र !

कुलभद्रः अलेखस्य चरणं धृत्वा भृशं व्यलपत् । अलेखः कारुणिकः संजातः ।

— कुलभद्र ! तर्हि, अहं प्रत्यागच्छामि ।

अवनी दृढमवदत् ।

— नहि, नैतत् करोतु भवान् । अभिषेकम् आरभताम् ।

कुलभद्रः विचलितोऽभवत् ।

— अस्मिन् काले त्वमपि तथैव……?

शन्नोदेवी अन्वनयत् ।

-- कथं सत्यभ्रष्टो भवति भवान् ?

— सत्यभ्रष्टः……? कः सत्यभ्रष्टो भवति ?

अवनी पुनः दृढीकृतवती ।

— भवान्……। भवानेव……।

— अवनी……?

— स्मरतु भवान् । मम विवाहदिवसं स्मरतु……।

— सम्यक् स्मरामि……।

— यदा पाणिग्रहणनिमित्तं मम पितृनिकटे प्रार्थितवान् स तदा

किमूक्तवान ? भवान् च किं कथितवान् ?

— नहि, न किमपि मानसम् आयाति ।

— भवान् सत्यबद्धः संजातः । संकल्पमुखेन सत्यमेव साक्षीकृत्य भवान् दृढमवदत्—"भवतः कन्यायाः पुत्र एव मम समग्रसम्पत्तेः अधिकारी भविष्यति । तस्य च अभिषेकं स्वयम् अहं कारयिष्यामि ।"······स्मर्यते नु ?

— अवनि······! अवनि···! कियन्न भयङ्करं सत्यम् ? अवनि······! त्वमेव अद्य मे चक्षुरुन्मीलितवती । इदानीं नयने मे सर्वं प्रतिभाति । कथमिदं प्रथमतो नोक्तवती ? किमर्थं चिरायितम् ? अहा······, अहं कियान्न मोहग्रस्तः ? कियान्न विषयविधुरः ? अवनि ! तदेव सत्यं मनसि निधाय एवावत् पर्यन्तं त्वं मया सह संग्रामं कृतवती । किन्तु····· त्वामहम् अन्यथा चिन्तयित्वा यथेच्छं भर्त्सितवान् । क्षमस्व माम्······, क्षमस्व······अवनि !

— विचलितो मा भवतु ।

— शन्नोदेवि···! त्वमपि अवनीं समर्थ्य विषयमिमं निगूहितवती । किन्तु अद्य वैशाखपूर्णिमा······। अद्यैव प्रतिज्ञापितो दिवसः । शन्नोदेवि···! सम्यक् स्मरामि—अस्मिन्नेव दिने एकदा गुरुदेव निकटे शुभाङ्कं समर्पयितुं संकल्पः कृतः । तस्य च मङ्गलनिमित्तं, मुक्तिनिमित्तमपि, बहुशः प्रार्थितो गुरुदेवः । सोऽयं साक्षी साक्षात् उपस्थितः······।

अलेखः समाश्वासितवान् ।

— आश्वस्तो भव कुलभद्र !

— गुरुदेव ! हृदये अद्य आनन्दं वा दुःखं किमपि ज्ञातुं न प्रभवामि । अयं शुभाङ्कः······अयं च अनन्तः । उभावपि भवदीयप्रसादत एव । उभयस्य मार्गं निर्दिशतु भवान् । 'इदानीं तु नयने मे भवत्प्रदर्शितः स एव सत्यपक्षः । तत्र सहायितुम् एकपार्श्वे शन्नोदेवी, अपरपार्श्वे च अवनी सदा दण्डायमाना । ······आशीर्वदतु······, इतः परं न कदाचिन् मे स्खलनं भवतु

— कुलभद्र ! पथि गच्छन्ति बहवः। किन्तु यदा चतुष्पथम् आयान्ति तदा सम्यक् पथं निश्चेतुं केचन प्रभवन्ति ? सत्यपथमाविष्कर्तुं वा केचन धैर्यशालिनो भवन्ति ? को वा अभिलषति,—तस्य उत्तराधिकारी सन्मार्गगामीं भूत्वा सत्यमाविष्करोतु ····· महात्मा भवतु ? केचन सन्ति तादृशाः ?

अनन्तः विनयी अभूत् ।

— गुरुदेव ! तर्हि, किमयं भग्नमार्गः मदर्थम् उद्दिष्टः ? मन्निमित्तं किं स एव पुरातनः पन्थाः ?

— नहि, अनन्त ! शुभाङ्कः मार्गं निर्मातुं प्रवृत्तः। त्वमपि तथा कुरु। मार्गाणां संयोगनिमित्तं न तदा नश्वरोऽयम् अलेखः तिष्ठेत् । अपितु अन्तर्निहितं सत्यं गुरुः भविष्यति ।

सर्वे स्तम्भीभूताः ।

अभिधानेत्रतले अश्रुलेखा । अवनी-शन्नोदेव्योः मध्ये स्थिता सा वचनशून्या । अपरपार्श्वे उपार्कः गुरुमेव पश्यन् स्थिरः । अलेखः कौषेयस्यूततः शंखमेकं वहिष्कृत्य उहार्कहस्तं प्रसारयत् । उपार्कः शंखम् अधमत् ।

अलेखो ध्यानस्थः ।

अभिषेकमारभत शुभाङ्कः । प्रथमतया मस्तकम उष्णीषम् अवतार्य अनन्तस्य तस्तके परिधापितवान् ततो ग्रीवातः अभिषेकमाल्यमानीय अनन्तस्य गलके अलम्बयत् । अभिधा अर्घ्य-पात्रं धृत्वा सम्मुखमागता । शुभाङ्कः चन्दनकुङ्कुमादिभिः अनन्तस्य मुखमाभूषयत् । अवशिष्टम् अभिधा अमण्डयत् । अनन्तस्य नयने तु लोतकप्लावनम् ।

शंखध्वनिः निरवच्छिन्नः ।

अनन्तः सर्वान् प्रणिपत्य अन्ततः शुभाङ्कनिकटे वाष्पविह्वलः संजातः ।

शुभाङ्कः अबोधयत् ।

— अनन्त ! अपिहितमपि सत्यं क्रमश आलोकपथमागच्छति । तदद्य त्वन्निकटे समुज्ज्वलम् । तदेव ग्रहणीयम् । तदेव महत् । संसारोऽयं धैर्यमिच्छति……साहसमिच्छति । अनुगमनेन वा किं प्राप्नोति जनः ? ममानुगमनं तु वृथैव । पृथक्तया सर्वम् अनुभवपथम् आनय । ततो ज्ञास्यसि……, आवयोः संपर्के दूरता कियती ? को वा कस्माद् वियुज्यते ?

शुभाङ्कः सर्वेभ्यः सुप्रस्थानं प्रार्थितवान् । सर्वे तु स्तब्धाः…… स्थिराः……स्थाणवः……।

अलेख उच्चारितवान् ।

— सत्यं परं धीमहि……

शुभाङ्क आवृत्तिमकरोत् ।

— सत्यं परं धीमहि… …सत्यं परं……धीमहि……।

प्रासादस्य पश्चिमद्वारम् उन्मुक्तम् । अलेखः अग्रेसृतः । मन्त्रमुच्चारयन् शुभाङ्कः शनैः प्रतिष्ठते । समग्रशरीरे कौषेयवसनम् । स्कन्धे कौषेयस्यूतम् । करे कमण्डलुः । चरणे काष्ठपादुका । शुभाङ्कः सत्यपथिकः ।

पश्चिमद्वारे सर्वे विरताः । कियद्दूरे अनन्तः शेषप्रणतिं निवेद्य सन्न्यासिद्वयं व्यसर्जयत् । श्रवणपुटे तस्य "सत्यं परं धीमहि" । अपरपार्श्वतः प्रतिध्वन्यते उत्सवस्य कोलाहलः । विक्लवहृदये तस्य निष्ठुरस्पन्दनं प्रगुणयति परिवारस्य सत्यनिष्ठता । अनन्तः दृष्टिं निवर्त्य सर्वान् प्रत्यागन्तुम् अनुरुद्धवान् । रक्षी मार्गं निरदिशत् ।

पश्चिमद्वारं पिहितम् ।

पौर्णमासी प्लावनस्वभावा । निशीथप्रकाशः प्रसाररसिकः सुन्दरग्रामस्य अभिषेकदीपाली तथापि कुलीना । नदीकूले शुभाङ्कस्तु परिव्राजकः ।

निजस्वरे स्नेहरङ्कः चक्रवाकः ।

**— समाप्तम् —**

# शुद्धि-पत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| आकलितवली | आकलितवती | ५ | १३ |
| शन्नादेवी | शन्नोदेवी | ५ | १९ |
| अभाषत् | अभाषत | ९ | २ |
| प्रत्यागमिस्यति | प्रत्यागमिष्यति | १३ | १७ |
| एतद्रष्ट्वा | एतद् दृष्ट्वा | १३ | २० |
| कत्र | तत्र | १९ | २ |
| सहर्षमपृच्छ | सहर्षमपृच्छत् | १९ | २० |
| वयह्मि | वयमिह | २० | ३ |
| वक्तं | वक्तु | २९ | १४ |
| लघ | लघु | ३८ | १० |
| सहृद्भाव | सुहृद्भाव | ३८ | २४ |
| अज्ञास्यात् | अज्ञास्यत् | ४१ | २८ |
| नियमा | नियमो | ४४ | १ |
| अकामयत् | अकामयत | ४४ | १६ |
| अयत्नतिहितम् | अयत्ननिहितम् | ४७ | १९ |
| तहि | तर्हि | ४८ | ४ |
| नर्हि | नहि | ४८ | १० |
| पिहितगती | पिहितवती | ४९ | २५ |
| तदापि | तदपि | ५० | १६ |
| यत् | तत् | ५३ | १५ |
| विषया | विषयो | ५३ | २१ |
| विलाक्य | विलोक्य | ५४ | ८ |
| सूचिविशेषः | सूचीविशेषः | ५५ | २ |
| विवाहनिषयं | विवाहविषयं | ५६ | ९ |
| निरन्त | निरन्तर | ६२ | १७ |
| भवसंलग्ना | भावसंलग्ना | ६५ | १४ |
| तहि | तर्हि | ६९ | १२ |
| अतीत | अतीव | ७१ | २२ |
| गृहमनम् | गृहगमनम् | ७२ | २ |
| रात्रो | रात्रौ | ७५ | ७ |
| त्वामंव | त्वामेव | ७६ | २३ |
| वातायनसमम्मुखं | वातायनसम्मुखं | ७७ | २ |

## देववाणी-परिषदा प्रकाशिताः केचन ग्रन्थाः

| | | |
|---|---|---|
| १. | भाति मौरीशसम् (डा० रमाकान्त शुक्लः) | रु० ६.०० |
| २. | सारस्वतसमुन्मेषः (डा० विन्ध्येश्वरीप्रसाद मिश्रः) | रु० २०.०० |
| ३. | श्रीपादसप्ततिः (श्रीपादपराग-व्याख्या) (डा० स्वामिनाथन्) | रु० ४०.०० |
| ४. | कूहा (काव्यम्) (डा० उमाकान्त शुक्लः) | रु० २०.०० |
| ५. | सदाशयसमुच्चयः (पं० टी० वी० परमेश्वर अय्यरः) | रु० १५.०० |
| ६. | आभाणकमञ्जरी ( „ „ ) | रु० १५.०० |
| ७. | जय भारतभूमे ! (काव्यम्) (डा० रमाकान्त शुक्लः) | रु० ३०.०० |
| ८. | अर्वाचीनसंस्कृतसाहित्यपरिचयः (प्रथम खण्ड) ( „ ) | रु० ३०.०० |
| ९. | „ „ „ (द्वितीय खण्डः) ( „ ) | रु० ४०.०० |
| १०. | राधाकृष्णरसायनम् (श्री ओट्टूर उण्णि नम्बूदिरीपादः) | रु० ४०.०० |
| ११. | निकषा (उपन्यासः) (डा० केशवचन्द्र दाशः) | रु० २०.०० |
| १२. | अभागभारतम् (काव्यम्) (श्रीसुन्दरराजः) | रु० २०.०० |
| १३. | भाति मे भारतम् (काव्यम्) (डा० रमाकान्त शुक्लः) | रु० ४०.०० |
| १४ | संस्कृत साहित्य में राष्ट्रिय भावना (डा० हरिनारायण दीक्षित) | रु० १५०.०० |
| १५. | साधारणीकरण : प्राच्य एवं प्रतीच्य चिन्तन (डा० सुलेखचन्द्र शर्मा) | रु० ५०.०० |
| १६. | अभिशापम् (नाटकम्) (डा० रमाकान्त शुक्लः) | रु० २०.०० |
| १७. | रससिद्धान्त और नाटक (डा० सुन्दरलाल कथूरिया) | रु० ६०.० |
| १८. | साहित्यकौतुकम् (पं० टी० वी० परमेश्वर अय्यरः) | रु० ४०.०० |
| १९. | पूर्णकुम्भः (ललितनिबन्धसंग्रहः) (पं० विष्णुकान्त शुक्लः) | रु० २०.०० |
| २०. | स्फूर्तिसप्तशती (डा० शिवदत्तशर्मा चतुर्वेदी) | रु० ३०.०० |
| २१. | रसदर्शनम् (डा० रमेशचन्द्र शुक्लः) | रु० ५०.०० |
| २२. | श्रीबदरीशतरङ्गिणी (काव्यम्) (श्रीसुन्दरराजः) | रु० २०.०० |
| २३. | सुरश्मिकाश्मीरम् ( „ ) ( „ ) | रु० २०.०० |
| २४. | पुरश्चरणकमलम् (नाटकम्) (डा० रमाकान्त शुक्लः) | रु० १०.०० |
| २५. | श्रीबदरीशसुप्रभातम् (डा० सी० आर० स्वामिनाथन्) | रु० १०.०० |
| २६. | पण्डितराजीयम् (नाटकम्) डा० रमाकान्त शुक्लः) | रु० २०.०० |
| २७. | नियतिचक्रम् (ध्वनिनाटकम्) ( „ „ ) | रु० २०.०० |
| २८. | श्रीगरुडध्वजसपादशतकम् (डा० रामकिशोर मिश्रः) | रु० १२.०० |
| २९ | लक्ष्मीशतकम्, (डा० वरदाचार्यकण्णन्) | रु० २०.०० |
| ३०. | अध्यात्मरामायण में अध्यात्म-चिन्तन (श्रीत्रिगुणानन्द शुक्ल) | रु० ४.००० |

देववाणी-परिषद्, दिल्ली, ६ वाणी-विहारः, नयी दिल्ली-११००५९.

## देववाणी-परिषदा प्रकाशिताः केचन ग्रन्थाः

१. भाति मौरीशसम् (डा० रमाकान्त शुक्लः) रु० ६.००
२. सारस्वतसमुन्मेषः (डा० विन्ध्येश्वरीप्रसाद मिश्रः) रु० २०.००
३. श्रीपादसप्ततिः (श्रीपादपराग-व्याख्या) (डा० स्वामिनाथन्) रु० ४०.००
४. कूहा (काव्यम्) (डा० उमाकान्त शुक्लः) रु० २०.००
५. सदाशयसमुच्चयः (पं० टी० वी० परमेश्वर अय्यरः) रु० १५.००
६. आभाणकमञ्जरी ( „ „ ) रु० १५.००
७. जय भारतभूमे ! (काव्यम्) (डा० रमाकान्त शुक्लः) रु० ३०.००
८. अर्वाचीनसंस्कृतसाहित्यपरिचयः (प्रथम खण्ड) ( „ ) रु० ३०.००
९. „ „ „ (द्वितीय खण्डः) ( „ ) रु० ४०.००
१०. राधाकृष्णरसायनम् (श्री ओट्टूर उण्णि नम्बूदिरीपादः) रु० ४०.००
११. निकषा (उपन्यासः) (डा० केशवचन्द्र दाशः) रु० २०.००
१२. अभागभारतम् (काव्यम्) (श्रीसुन्दरराजः) रु० २०.००
१३. भाति मे भारतम् (काव्यम्) (डा० रमाकान्त शुक्लः) रु० ४०.००
१४. संस्कृत साहित्य में राष्ट्रिय भावना
(डा० हरिनारायण दीक्षित) रु० १५०.००
१५. साधारणीकरण : प्राच्य एवं प्रतीच्य चिन्तन
(डा० सुलेखचन्द्र शर्मा) रु० ५०.००
१६. अभिशापम् (नाटकम्) (डा० रमाकान्त शुक्लः) रु० २०.००
१७. रससिद्धान्त और नाटक (डा० सुन्दरलाल कथूरिया) रु० ६०.०
१८. साहित्यकौतुकम् (पं० टी० वी० परमेश्वर अय्यरः) रु० ४०.००
१९. पूर्णकुम्भः (ललितनिबन्धसंग्रहः) (पं० विष्णुकान्त शुक्लः) रु० २०.००
२०. स्फूर्तिसप्तशती (डा० शिवदत्तशर्मा चतुर्वेदी) रु० ३०.००
२१. रसदर्शनम् (डा० रमेशचन्द्र शुक्लः) रु० ५०.००
२२. श्रीबदरीशतरङ्गिणी (काव्यम्) (श्रीसुन्दरराजः) रु० २०.००
२३. सुरश्मिकाश्मीरम् ( „ ) ( „ ) रु० २०.००
२४. पुरश्चरणकमलम् (नाटकम्) (डा० रमाकान्त शुक्लः) रु० १०.००
२५. श्रीबदरीशसुप्रभातम् (डा० सी० आर० स्वामिनाथन्) रु० १०.००
२६. पण्डितराजीयम् (नाटकम्) डा० रमाकान्त शुक्लः) रु० २०००
२७. नियतिचक्रम् (ध्वनिनाटकम्) ( „ „ ) रु० २०.००
२८. श्रीगरुडध्वजसपादशतकम् (डा० रामकिशोर मिश्रः)
२९. लक्ष्मीशतकम्, (डा० वरदाचार्यकण्णन्)
३०. अध्यात्मरामायण में अध्यात्म-चिन्तन (श्रीत्रिगुणानन्द शु



देववाणी-परिषद्, दिल्ली, ६ वाणी-विहारः, नयी दिल्ली